

**Proverbs in Saṁskṛta**

Proverbs are coherent and lively documents of human experiences in succinct manner. These give vigor to language. Some proverbs are for shock treatment to the stupid ones. Some are drumbeats to the slumbering lethargic! Proverbs are strong pulses of folklore. Citing proverbs in daily conversation is age-old practice of people. Collection and study of these wonderful aphorisms are made several times in hundreds of languages of the world. We do not know original creators of these by name. But we do know modern authors by name who have produced proverbs afresh inspired by the old ones. ***Ābhāṇaka-jagannātha,*** a compilation of new proverbs in Saṁskṛta is authored by S.Jagannatha, free thinker. This work is permeated with new maxims, imaginations, teeny-weeny sketches of author's own experience and imitation of old adages.The number of proverbs is one thousand, three hundred and twenty two(1322). All proverbs are classified and arranged alphabetically in every classified group. Meanings of difficult words in footnotes and introduction of proverbs are in Saṁskṛta itself. Contents of the subjects are provided at the beginning. Alphabetical lists of–all the proverbs, subjects and the words shown in the footnotes–are given at the end for quick reference.

**संभाषणे च रचने सांस्कृते जनताप्रियः ।**
**आभाणकजगन्नाथः सृज्यान्मह्या महामुदम् ॥**

Price: Interest in modern Saṁskṛta literature, making the Ābhāṇakas by heart, using them in conversation as well writing.


**Jagannatha**
**jgrantha@gmail.com**


**आ भा ण क ज ग न्ना थः**

# आभाणकजगन्नाथः

संस्कृतेन व्यवहारं चिकीर्षूणां साहित्यं रिरचयिषूणां च कृते रचिताः
द्वाविंशत्यधिकत्रिशतोत्तरसहस्रं (१३२२) संस्कृताभाणकाः

## 1322 Proverbs in Saṁskṛta



**संभाषणे च रचने सांस्कृते जनताप्रियः।**
**आभाणकजगन्नाथः सृज्यान्मह्या महामुदम्॥**




जगन्नाथः



# आभाणकजगन्नाथ:

द्वाविंशत्यधिकत्रिशतोत्तरसहस्रं [१३२२] संस्कृताभाणकाः

संस्कृतेन व्यवहारं चिकीर्षूणां साहित्यं रिरचयिषूणां च कृते रचिताः

**सुपरिष्कृतं  परिवर्धितं च तृतीयं संस्करणम्**

**जगन्नाथः**



ĀBHĀṆAKAJAGANNĀTHA One thousand, three hundred and twenty two (1322) proverbs conceived afresh in Saṁskṛta.

Author: S.Jagannatha, free thinker.
Typesetting, layout work and line drawings : Author.
Cellphone: 9972016425



**jgrantha@gmail.com**

**Price: Interest in modern Saṁskṛta literature, making the Ābhāṇakas by heart, using them in conversation as well writing.**

**Jagannatha**

**jgrantha@gmail.com**

# आभाणकानां प्रपञ्चः

अयमाभाणकजगन्नाथो मया नूतनं सृष्टानाम् आभाणकानां संकलनम्।

लौकिकभाषाव्यवहारीयस्य शोभनस्य वितानस्य १.प्रहेलिकाः २.वाग्रूढयः (लोकोक्तयो वा) ३.सुभाषितानि तथा ४.आभाणकाश्च चतुराधारस्तम्भायन्ते। प्रहेलिकाविचारस्य प्रकृतग्रन्थबहिर्भूतत्वादन्यत् त्रयं किञ्चिदत्र प्रस्तूयते।

लोकोक्ति-सूक्ति-सुभाषितादिसंज्ञाभिलप्यानि वाक्यकदम्बकान्येव आभाणका इति प्रायोवादः। वस्तुतस्तु संभाषणेषु या नैसर्गिकी छटा वर्तते, सा लोकोक्तिपदाभिलप्या यस्या इङ्ग्लीष् भाषायां idiom इति संज्ञा। केचन जयदेवादय आलङ्कारिका लोकोक्तिम् अर्थालङ्कारं परिगणयन्ति। यथा पदेषु रूढत्वं तथा वाक्येष्वपि रूढत्वम्। एकस्यैव पदस्य यथा रूढिवशादनेकार्थप्रदत्वं तथा वाक्यानामपि रूढिवशादेवानेकार्थप्रदत्वम्। यथा "नेत्रे निमील्य समयाकरोति"इत्यादिषु वाक्येषु चिन्ताराहित्यं, "नेत्रे निमील्य हस्ताक्षरं ददाति"इत्यादिषु वाक्येषु विचाराभावः,"मम नेत्रनिमीलनानन्तरं तव का गतिर्भविता" इत्यादिषु वाक्येषु मरणं च द्योत्यत इति सर्वसम्मतम्। केषुचन अलुक्समासेष्वपि स्थितिरीदृश्येव। "देवानांप्रिय" इत्यत्र यथा। रूढवागिति वा वाग्रूढिरिति वा वाक्यानाम् अमीषां संस्कृते संज्ञा भवितुमर्हति।

सूक्तिसुभाषितादीनां लोकोक्त्यर्हेभ्यो भवनेभ्यो भिन्नेष्वेव भवनेषु प्रवेशयोग्यत्वम्। अभिधालक्षणान्यतरव्यापारवन्ति सुभाषितानि यत्र सुष्ठुविचारत्वेन रचयित्रा परिगणितस्य वस्तुनः सोदाहरणं निरुदाहरणं वा बोधनं प्रधानम्। पदसमुदयशक्तिमती लोकोक्तिः।

लोकान् लोकव्यवहारांश्च आभाणका वक्रया दृशाऽपि कटाक्षयन्ति, सुभाषितानीव ऋज्व्या दृष्ट्याऽपि वीक्षन्ते। इत्थम् आभाणकानां सुभाषितानां च सत्यामपि परस्परेण मैत्र्यां कुसुमस्येव परिमलं सुभाषितानां, हिङ्गुन इवोग्रो गन्ध आभाणकाना-

मिति भेदस्तु समस्त्येव। वात्सल्यपूर्णानि सुभाषितानि जागरितान् करपल्लवेन परामृशन्तीव। रौद्राः पुनराभाणकाः स्वप्नालून् कशया प्रहरन्तीव। मातङ्गानां लुठनं महागभीरे जले यत्र महतां यादसां दर्शनम्। परन्तु महिषः कर्दमे लुठति यत्र मालिन्ये मनोहत्य कृमयः प्लवन्ते। जनताजीवनं न केवलं समण्डः क्षीरसागरोऽपि तु सकर्दमा स्यन्दनिकाऽपि। मण्डं पाययति सुभाषितम्। कर्दमं लिम्पत्याभाणकः।

गजानां घण्टापथेऽपेक्षिते छुछुन्दरीणां छिद्रं पर्याप्तम्। राजमार्गस्य ज्ञानमिव रन्ध्रस्यापि ज्ञानमावश्यकम्। गजाः कन्धरं परिवर्त्य पश्चाद् द्रष्टुं न शक्नुवन्ति गन्धमूषिकास्तु बाढं शक्नुवन्ति ।सुभाषितैरपि कदाचित् सर्वतोदिशं कटाक्षो न निक्षिप्यते। एतादृशं नैःशक्त्यं नास्त्याभाणकानाम्।

शान्तिरसः सुभाषितानां जीवनाडी। हास्यवीररौद्ररसा आभाणकानां मर्म। सुभाषितराजसभायाम् आभाणकविदूषकस्य स्थानमक्षतम्। उद्यानेषु मयूरा इव मर्कटा अपि प्रेक्षकान् रञ्जयन्ति!

सुभाषितानि गद्ये पद्ये च कामं गोचरीभवन्ति। संस्कृतेतरासु भाषास्वाभाणकाः प्रायशो गद्ये। मात्रागणदृष्ट्या वृत्तगन्धिनोऽप्याभाणकाः क्वचिद् दृश्यन्त इत्यन्यदेतत्।

वाक्यबन्धदार्ढ्यमेवाभाणकानां शरीरम्। यदि सत्यमुच्यते, "यो यच्छ्रद्धः स एव सः" इति भगवद्गीतावाक्यम् (१७.३) आभाणक एव।

वस्तुतस्तु, केवलं सामान्यं, केवलो वा विशेषः स्वरूपमाभाणकस्य। लक्षणमिति नोक्तं सुभाषितेऽतिव्याप्तिप्रसंगात्। अर्थान्तरन्यासस्त्वाभाणकत्वं निहन्ति, सुभाषितवेषं च लम्भयति।

संस्कृतभाषायाम् आभाणका एव न सन्तीति **केषाञ्चित्** संस्कृतेतरभारतीय-भाषाविदुषां घोषणा तु संस्कृतवाङ्मयापरिज्ञानमूलिका। सत्यपि सुभाषिताभाणकयो-र्भिन्नकक्ष्यावत्त्वे सुभाषितसंग्रहेष्वाभाणका बहवः कथंचित् प्रविष्टाः। अपि च शास्त्रग्रन्थेषु काव्यादिषु च आभाणकाः सहस्रश उपलभ्यन्त एव। "शान्तिकर्मणि वेतालोदयः",



"आम्रान् पृष्टः कोविदारानाचष्टे","भक्षितेऽपि लशुने न शान्तो व्याधिः","अहिरेव ह्यहेः पादान् विजानाति न संशयः", "गुरोः पापं शिष्यः", "घट्टकुट्यां प्रभातः", "शेषं कोपेन पूरयेत्"इत्यादय आभाणकाः किल प्रथिता एव। वेदान्तदेशिकीयासु कृतिषु न्याया आभाणकाश्च प्रचुरतराः। सोमदेवीये नीतिवाक्यामृते वर्तमानेषु वाक्येषु बहून्याभाणकशैल्यैव रचितानि। केषांचन शास्त्रकाराणाम् आभाणकनिर्माणे परमोत्कटं कुतूहलं, किमुत साहित्यं रचयितॄणाम्। एतादृशानां सुभाषितभिन्नानां वाक्यानां संकलनं संपादनमध्ययनं च नितरामपेक्ष्यते।

शास्त्रीयेषु न्यायेषु च कदाचिदाभाणकच्छटामिव स्पृशन्ती शैली दृश्यते। तत्र "न्यायः" इति शब्दोल्लेखादेव आभाणकत्वौज्ज्वल्यं नैयून्यमिव गतम्। वक्तव्यानां सर्वेषाम् अंशानां सामासिकपदाकारेण संपुञ्जनमप्यपरोऽत्र हेतुः स्यात्।

सूक्तित्वेन सुभाषितत्वेन वा परिगण्यमानानां **सर्वेषां** वाक्यानामुत्कृष्टस्तरीयत्वं वा सज्जनयोग्यस्य पथो दर्शनसामर्थ्यं वा नास्त्येव। सुभाषितसंज्ञया प्रसिद्धानि **कतिचन** वाक्यानि वस्तुतो दुर्भाषितानि। पौण्ड्रकवासुदेवस्य कथाऽत्रानुसंधेया। अश्लीलता, लोकानुपयोगिता, मूर्खगेयाऽपकृष्टता इत्यादयः साधारणा धर्मास्तत्र। सुभाषितानां पांसुक्रीडासखा आभाणका अपि **कदाचिदे**वंशीला एव। सुभाषिताभाणकाः **सर्वेऽपि** सत्यलोके सृष्टास्तस्मान्नीतिघण्टापथं सर्वेभ्यो दर्शयितुं ते प्रभवन्तीति तद्भक्तोत्तमानां पटहः। तथा सति पतञ्जलिर्योगसूत्रे "सुभाषिताभाणकानामध्ययनेन कण्ठेकरणेन च मोक्षप्राप्तिः" इत्यसूत्रयिष्यत्! अनुभवविशेषाणां साधारणीकरणं किल स्वरूपम् उभयेषाम्। तेषां रचयितारः साधारणजनाः सन्तु,पण्डिता वा सन्तु-नैव आकाशात् पतिता देवाः। एते **सर्वेऽपि** महाबुद्धिमन्त इति महागप्पम्। केचन त्वपक्वबुद्धय इव। आचार्यैः प्रणीतेषु दार्शनिकेषु तत्त्वेष्वेव सम्मत्यनर्हाः समया बहवो वर्तन्ते येषां खण्डनमत्यावश्यकं मन्यन्ते मान्याः। एवं सति,अशिक्षितानां मुखेभ्यः प्रसंगान्निःसृता विन्यासवैचित्र्येण चमत्कारमातन्वाना आभाणकीया व्याहाराः सर्वे स्वर्गस्तरीया इति प्रतिपादने किं तात्पर्यमिति तु पटहं वादकास्त एव जानन्ति।

सुभाषितत्वेनाभाणकत्वेन च लोके प्रसिद्धाः, सुभाषितसंग्रहेषु च मुद्रिताः **केचन** वाक्यसमुदायास्तु कच्चरपरीवाहस्तरीयाः। स्त्रीणामवमाननया पुरुषाणा-मुद्धटत्वप्रदर्शनमेतेष्वतीव साधारणं वस्तु। वस्तुतस्तु काव्येषु यथा उत्तम-मध्यमा-धमत्वं तथा 'सु'(?)भाषितेष्वप्याभाणकेष्वपि!

"पतिरस्तु लम्पटो मद्यपायी वा तस्य पादयोः प्रक्षालनं प्रतिदिनं पत्न्या करणीयम्" इति स्त्रीणामुपदेशनां कुर्वाणानां पद्यानां संकलनं नवीनेष्वपि केषुचन 'सुभाषित'(?)संग्रहेषु दृष्टं मया। हंहो ! ''रोगिणीम् उन्मत्तां दोषैरनेकैर्दूषितामपि पत्नीं पतिर्न त्यजेद् " इति वा,''पतिः पत्न्यां सदाऽपि स्निह्येद् " इति वा 'सु'-भाषितेष्वेतेषु कदाऽपि नोच्यते ! वस्तुतस्तु इतिहासपुराणादिकं युद्धादिवर्णनाद् भाषासौष्ठवाद्वा श्लाघ्यं, न पुनरेतादृशानां 'सु'भाषितानां कारणात्। एवंभूताः श्लोका इतिहासे पुराणेषु च वर्तन्तां नाम, तेन किम् ? श्लोकेष्वेतेषु भूयान् 'आदर्शो' वर्तत इति घोषयितॄणां मध्ये केचिदात्मानं संस्कृतज्ञत्वरूपधर्मवन्तं ख्यापयन्त इति तु गण्डस्योपरि विस्फोटः। ते प्रष्टव्याः-रामलक्ष्मणादयः पाण्डवादयश्च युद्धविद्यायां निपुणतमा इति यत् प्रतिपाद्यते रामायणे भारते च तत्र किमिति भवद्भिः कटाक्षो न पात्यते ? किमर्थं वा भवन्तः सैनिका न बुभूषन्ति ?

पञ्चतन्त्रे वर्तमानाः काश्चनाश्लीलाः कथाः कामुकैः पुरुषैर्वान्ता इत्यत्र न संशयः। तासु कथासूद्धृतानां **केषाञ्चन** पद्यानां भावा अनार्यैर्धूर्तैर्वा श्लाघ्या न पुनरार्यैः। मत्के ग्रन्थभवनेऽस्मिंस्तादृशानां प्रवेशावकाशो निर्दाक्षिण्यं न्यषेधि।

"तर्हि भवता सृष्टानाम् आभाणकानां सर्वेषां ग्राह्यत्वं कथम् ?" इति प्रश्नः सहजः। अत्रेदं प्रामाणिकमुत्तरम् :- प्रकरणवशान्मम प्रतिभातानामाभाणकानामयं संग्रहः। अत्रत्यानां सर्वेषां वाक्याभिप्रायाणां सज्जनगेयत्वस्य परमोत्कृष्टस्तरे वर्तमानत्वस्य वा प्रतिपादयितुमशक्यत्वेऽपि जुगुप्साधायिनोऽर्थाः प्रयत्नादत्र पर्यहारिषतेति तु कथञ्चित् स्वभुजास्फालनस्य हेतुः स्यात्। लोकानुपदेष्टुं मादृशस्य साधारणस्य जनस्य का वाऽस्त्यर्हता ? वाक्यानां भङ्गीवैचित्र्यमेव ग्रन्थेऽस्मिन् प्रधानतयाऽवधेयो धर्मः।



वैयक्तिकाः केचनानुभवाः, श्रुता घटनाः, दृष्टानि दृश्यानि,पठितेषु साहित्येषु प्रतिक्रियाः,जगदेवंप्रकारकं भूयादिति स्वप्नः, एवं वर्तत इति वास्तविकीं दृष्टिमवष्टभ्य कृतं विश्लेषणं, विषादो, विनोदश्च-एतत् सर्वम् आभाणकत्वधर्मं लम्भितमत्र।

जीवनं कया दिशा द्रष्टव्यमित्यत्र दर्शनमेते न कारयन्ति। जीवनं कथं वर्तत इति ज्ञानार्थं वास्तविकं जीवनमेवानुभवितव्यम्। आभाणका एते तु जीवनं कया दिशा **मया** दृष्टमित्यस्य पञ्जीकृतयः।

नूतनानाम् आभाणकानां जन्मने प्रेरणामेतेष्वाभाणकेषु यच्छत्सु,तावता संतोष्टव्यम्। एतेषु केचन गर्जन्ति, केचन तर्जयन्ति, केचन फूत्कुर्वन्ति, केचन जागरयन्ति, केचन ताडयन्ति,केचन पाडयन्ति,केचन स्फुलिङ्गान् उत्सृजन्ति, केचन च चपेटिकां यच्छन्ति। पठितेष्वेतेषु मनसः कालुष्यं विनश्यतीति केनापि न भ्रमितव्यमिति सुविस्पष्टं निवेदितमधस्तात्।

सुभाषितेष्विवाभाणकेष्वप्यभिधालक्षणे प्रधाने। व्यञ्जना विरला। शास्त्रेषु पुनर्व्यञ्जनाया एवावसरो नास्ति, किमुत ध्वनेः ? "न सर्वत्र ध्वनिरागिणा भाव्यम्" इति आनन्दवर्धनीयं वचनं श्रुत्वाऽपि, पठितेषु सर्वेष्वपि साहित्येषु, किंबहुना-भगवद्गीतायामपि ध्वनिमन्वेषमाणाः नोपदेष्टव्याः। वस्तुतस्त्वत्र लोका एवंप्रकारकदृष्टि-वैविध्यवन्त एवेति समाधेयम्। "मुण्डे मुण्डे मतिभेद" इति वर्तत एव कश्चन प्राचीनाभाणकः ! "ध्वनिरहितं किमपि पद्यं रघुवंशे नास्ति" इति कदाचिद् गर्जितवान् कश्चित् सज्जनो मम पुरस्तात्। तादृशसज्जनपितृव्या दिव्यचक्षुष्काः केचन सर्वेष्वाभाणकेषु व्यञ्जनां पश्येयुश्चेत् किमपि नाश्चर्यं तत्र। किमनेन द्राविडप्राणायामेन? एष सारः:-आभाणकेष्वभिधालक्षणयोरेव विजृम्भणम्। तेषु व्यञ्जना नैव समस्तीति प्रतिपादयितु-मशक्यत्वेऽपि सा लज्जालुर्मनुष्यदर्शनभीतेव वन्या हरिण्यतीव वैरल्येनात्मानं दर्शयते।

आभाणक इत्यर्थे कन्नडे वर्तमानो **गादे**शब्दो **गाथा**शब्दमूलक इति ताव-दविवादम्। **गाथा**शब्दश्च संस्कृतप्राकृतोभयगोचरः। अत्र प्राकृतगत एव गाथाशब्दे कन्नडदोषज्ञानां धिषणापक्षपातः। अधीदंविषयं मामकीनोऽयं पर्यनुयोगप्रकारः:

गाथाशब्दः प्राकृतादेव संस्कृतं प्रविष्ट इत्यत्र नास्ति गमकः। "कल्याणी बत **गाथेयं** लौकिकी प्रतिभाति मे। एति जीवन्तमानन्दो नरं वर्षशतादपि "इति रामायणीये श्लोके (सु. ३४.६)गाथाशब्दो जनतया व्याह्रियमाणायां सामान्यायां नीतौ वर्तते। "**गाथा** ताथागतानां गलति "(वेदान्तदेशिकप्रणीते तत्त्वमुक्ताकलापे पञ्चशततमं पद्यम्)इत्यत्र **गाथा**शब्दः शास्त्रीयं समयं न्यायं वा सूचयति। मैत्रेय्युपनिषदि वर्तमानो गाथाशब्दः प्राकृतमूल इति कथमवसेयम् ? प्राकृतगाथा नैवाभाणकसखी। सा छन्दोविशेषः। यदि प्राकृतगाथाशब्द एव गादेशब्दस्य मूलमभविष्यत्, तालगतिं वा छन्दोगतिं वा स नात्यक्ष्यन्नापि नीतिबोद्धृत्वरूपं भिन्नतरं कर्तव्यभारम् अवक्ष्यत्। कन्नडभाषायाम् उपलभ्यमानानि सर्वाण्यपि गादेवाक्यानि गद्यमयान्येव। **गादे**शब्दस्य गीतपरत्वेऽपि गाथक-गाथि-शब्दयोर्वैदिकयोरस्य बन्धुत्वं निरपवादम्। नीतिबोद्धृत्वरूपधर्मवत्योऽपि गाथाः संस्कृतवाङ्मये कामं गोचरः। तस्मात् कन्नडाभाणकभवनं **गादे**रूपेण प्रविष्टोऽतिथि**र्गाथा**शब्दो मूलतः सांस्कृतस्यैव साम्राज्यस्य प्रजेति किं न सुवचम् ?

ममेदं प्रतिपादनं विद्यानिधिबिरुदभाजा बेङ्गळूरवीयेन न्याषनल्-कालेज्-के संस्कृतविभागाध्यक्षेण प्राचार्येण तत्रभवता के.एस्.कण्णन्वर्येण संकलिते संपादिते च सकन्नडानुवादे सूक्तिकोशे समुद्धृतं पद्यं पोषयति।

इत्थंभूतं तत् पद्यम्-

सर्वोद्वेगकरं मृगादनममुं संत्यज्य हा धिक् त्वया
लोकस्यानपकारिणं गिरिनदीतीराटवीनिर्वृतम्।
अश्नन्तं तृणमेणशावमदयं व्याध! घ्नतामुं वृथा
'देवो दुर्बलघातकोऽय'मिति सा **गाथा** यथार्थीकृता[१] ।।

न केवलमेतावदेव, तत्रभवान् सुविस्पष्टमेवमाह-''कन्नडस्य **गादे**वाक्यानां

१.सूक्तिकोश-के.एस्.कण्णन्। पृ.३०. Abhijñāna, Gokhale Institute of Public Affairs Campus, N.R.Colony, Bangalore-560019. 2007



संस्कृतस्य **गाथा** एव मूलम्(कन्नडद 'गादे'गे संस्कृतद 'गाथे'ये मूल)"।

**केषुचन** कन्नडाभाणकेषु भागद्वयम्-पूर्वार्धम् उत्तरार्धं चेति। उभौ भागौ मात्रागणेन वा अंशगणेन वा किञ्चिदिव उच्चारणकालसाम्यं कदाचिद् दर्शयतः। अनेकेषु आभाणकेषु भागद्वयस्यापि प्रथमौ शब्दौ (आदिमे वर्णे आहोस्विद् द्वितीये वर्णे)प्रासवन्तौ। एतेन बन्धदार्ढ्यमाविर्भवति।

संस्कृतेतरभाषागताभाणकानामनुवादाः पूर्वैः सूरिभिः कृताः। देवनागरीलिप्या वङ्गभाषागताः केचनाभाणकास्तेषां संस्कृतानुवादाश्च-उभयेषां दर्शनं मया कृतं संस्कृतचन्द्रिकापत्रिकायाम् (१९०५ एप्रिल्-१९०६मार्च्)। **वङ्गीयप्रवादानुवाद** इति कृतेरस्याः संज्ञा। तत्र रचयितुर्नामधेयं न मुद्रितम्। रचयिता पीठिकायाम् एवं ब्रवीतिः-"इमानि खलु प्रवादवचनानि वङ्गीयस्थानात् प्राचीनेभ्यः पुरुषेभ्यो योषिद्भ्यश्च कलहशीलाभ्यः (!)समग्राहिषम् "। कृतिरियं पार्थक्येन ग्रन्थाकारं लम्भिता वा न वा न जाने। ततश्च करूर् शेषाचार्येणापि **लौकिकगाथाचतुश्शती**ति संज्ञया केषाञ्चन कन्नडाभाणकानामनुवादः संस्कृतत्वं लम्भितः। मूलमत्र न दत्तम्। स ग्रन्थो महाराजसंस्कृतमहापाठशालापत्रिकायां प्रकटितः। पार्थक्येनापि ग्रन्थाकारं प्रापितः।

लोकप्रसिद्धाभाणकानामनुकरणेन स्वतन्त्रान् आभाणकान् केचिदरचयन् ग्रन्थरूपेण प्राकाशयंश्च। तत्रभवता वासुदेवद्विवेदिना रचिता **दीपकलिका** (या परमार्थसुधायां प्रकटिता)अत्र निदर्शनम्। **आभाणकमञ्जर्य**प्यत्र गणनीया या अर्वाचीनसंस्कृतप्रकाशनतः प्रकटिता।

वर्षाणां सप्तविंशतिः प्रयतितनवीनाभाणकसर्जनस्य मम। चतुःशतम् (४००) आभाणकास्तदा रचिताः "सुधर्मा"पत्रिकायां च क्रमशः प्रकटिताः। गच्छता कालेन पूर्वरचितेष्वाभाणकेषु शतम् आभाणका बन्धदार्ढ्यहीनत्वादुत्पाटिताः। एवम् आहत्याभाणकसंख्या त्रिशतम् (३००) अभूत्। अवशिष्टेष्वपि शैलीदृष्ट्या बहवो लोपागमादेशाः कृताः। तत एकोत्तरं त्रिशतम् (३०१)आभाणका योजिताः। एकोत्तरं षट्शतम् (६०१)

आभाणकाः ''नन्दनवनकल्पतरौ''प्रकटिताः। तस्यां पत्रिकायाम् आभाणकाः सर्वे अकारादिक्रमयुज आसन्। अधुना प्रकाशमाप्नुवाने ग्रन्थेऽस्मिन् आभाणका विषयानुगुण्येन विभक्ताः। नूतना अपि बहवो योजिताः। ''सागरिका''याः प्रख्याग्रन्थमालायां प्रकटिते प्रथमे मुद्रणे केवलं चतुरुत्तरसप्तशतम्(७०४)आभाणका दत्ता आसन्। द्वितीये मुद्रणे चतुःशतमाभाणका अधिका अभूवन्। आहत्य शतोत्तरसहस्रम् (११००)अभूत् संख्या। तृतीयेऽस्मिन् संस्करणे पुनरधिका द्वाविंशत्युत्तरं द्विशतमाभाणका योजिता यत्फलतयेदानीम् आभाणकानामाहत्य संख्या त्रिशतोतरं सहस्रं द्वाविंशतिश्च(१३२२)। सत्यं निगूहितुं नेच्छामि। त्रिशतोत्तरसहस्रमिति संख्ययाऽऽकृष्टोऽस्मि। संख्यापूरणार्थं सृष्टानां सर्वेषामप्याभाणकानां प्रशस्तत्वं नैव सिद्ध्यतीति तु स्फुटम्। अस्तु, पीठिकायां बहवो नूतना विषयाः प्रतानिताः। प्रथममुद्रणगतायां पीठिकायां स्थिता विचारविरुद्धा अंशा द्वितीय एव संस्करणे परित्यक्ताः। तृतीयसंस्करणगतायां पीठिकायां नवीनमपि विषयजातमितिहासपुराणगत'सु'भाषितानां विषये योजितम्। अपि च 'एवमपि कदाचित्(३)','प्रेम्णो महिमा(२९)','वाल्मीकीयभिन्नंरामायणम्(४८)','अभिमानलेशेनापि हीनाः(५२)','दर्शनम् (९६)' च-एते पञ्च विभागा नवीनास्तृतीये संस्करणे।

क्लिष्टेऽस्मिन् कर्मणि व्यापृतस्य मम बुद्धम् आभाणकानां रचनावेदना प्रसूतिवेदनानिर्विशेषेति। कदाचित् प्रासाभानं, कदाचित्समुचितपदाभानं, पदप्रासयोर्भानि कदाचिदर्थास्तव्यस्तता- सर्वमपि मयाऽनुभूतम्। कदाचिदाभाणकानां रचना क्लिष्टेति त्यक्तव्य एष उद्यम इत्यपि चिन्तितम्। सुभाषितानां रचनापेक्षयाऽऽभाणकानां रचना क्लिष्टतरेति विदितम्। कथंचिद् हठेन पूर्तिमनायि ग्रन्थोऽयम्।

आभाणकानां विभागोऽत्र स्थूलया दृष्ट्या कृतोऽस्ति। तेषां वर्गीकरणम् अतीव क्लेशप्रदं कर्म। शक्यम् एकस्यैवाभाणकस्य द्वयोर्विभागयोर्द्व्यधिकेषु वा विभागेषु स्थापयितुम्। मया यस्मिन् विभागे य आभाणकः स्थापितस्तदपेक्षया भिन्नतर एव विभागे तस्याभाणकस्य स्थापनोचिततरेत्यपि कदाचित् पाठकानां प्रतिभायात्। अत्राभाणकानां विश्वतोमुखत्वमेव कारणम्।



द्वितीये संस्करणे केषुचनाभाणकेषु वैदिकानां शब्दानामुपादानमपि कृतमासीत्। तृतीये तु संस्करणे तेषां संख्याऽधिकतरा जाता। अत्र किञ्चिद् विवक्षामि। कालिदासेन शाकुन्तलचतुर्थाङ्के **अमीं वेदि**मित्यादिपद्यस्य वैदिक्या भाषया निर्माणं, **वेदपाद**स्तोत्रेषु (विष्णुवेदपादस्तव-हयग्रीववेदपादस्तवेत्यादिषु) कविभिर्वास्तविकानामेव वैदिकानां वाक्यानां चतुर्थे पादे समादानं, वैदिक्यैव भाषया सूक्तादीनां दर्शनं (महर्षेर्दैवरातस्य **छन्दोदर्शन**मत्र प्रसिद्धमुदाहरणम्),वैदिकीं शैलीमवलम्ब्य सूक्तपद्यादिरचना (नवलकिशोरकाङ्करस्य **राष्ट्रवेद**स्तथा वेदभारतीस्वामिनश्**छान्दसी)** इत्येतासु कृतिषु वैदिक्या जीवनाङ्ख्या लौकिक्यां भाषायामवशेषणार्थं प्रयत्नः कृतः। तस्मान् मत्कायां रचनायां केषाञ्चन वैदिकानां पदानां प्रवेशो नातीव विचित्रः। एष रचनाया मानोन्नतये प्रभूयादिति ममाशीः। वैदिकानां शब्दानामर्थविषये(२.१५, ९.१०,१५.१,२३.६) डा.सुधीरकुमारगुप्त-नानावते-मधुसूदनमिश्ररचितानां संशोधनप्रबन्धानामवलम्बनं कृतम्। अम्बरकरण्डकशब्दे(३२.४) के.वि.कृष्णमाचार्युलुरचितः संशोधनप्रबन्धः, अभिनिम्रुक्तशब्दे(६२.१५)तिरुमङ्गलं नडादूर् नरसिंहाचार्यरचितः शिष्टप्रयोगसंग्रहः, सौशब्दे(९१.८)डा.कुलकर्णिसंपादिता सौभरिरचिता एकाक्षरमाला, नागस्वरशब्दे(९२.६) च डि.टि.ताताचार्यशिरोमणिरचितः संशोधनप्रबन्धश्च प्रमाणम्। पञ्चत्रिंशे(३५)विभागे दत्तानां पक्षिनाम्नामाधारस्तु एल्फ्रन् लिङ्क्रचितं पक्षिनामपरिशिष्टम् ।

अत्यन्तमवधानेन प्रतिसंस्कृतं तृतीयमिदं जन्म। एकविंशत्युत्तरं द्विशतमाभाणका अधिका अस्मिन् संस्करणे। बहवो लोपागमादेशाः, योजनेष्वकारादिक्रमस्य शुद्धं स्थापनं, मुद्रणदोषाणां क्वाचित्कानां परिमार्जनमित्यादि कृतं संस्करणेऽस्मिन्। टिप्पणीगतानां सर्वेषामपि पदानामकारादिक्रमवती सारणी, वाचकानां झटित्यभीष्टाभाणकपरामर्शानुकूल्यस्य सिद्ध्यै सर्वेषाम् अप्याभाणकानाम् अकारादिक्रमयुक् परिशिष्टं चान्ते योजिते ।



# कृतज्ञतासमर्पणम्

मदीयाः शतं नतयः-

-नन्दनवनकल्पतरौ आभाणकजगन्नाथस्य प्रकाशनकृपाप्रदायकेभ्यस्तत्र-भवद्भ्यो विजयशीलचन्द्रसूरिवर्येभ्यः, ग्रन्थरूपेणामीषां प्रथमं प्रकाशनं कृतवद्भ्यां प्रख्याग्रन्थमालायाः संपादकाभ्यां डा.राधावल्लभत्रिपाठि-डा.अच्युतानन्ददाशाभ्यां, द्वितीयसंस्करणं प्रकाशयित्रे विश्वविख्यातायाः परिमलग्रन्थप्रकाशनसंस्थाया अध्यक्षाय श्री कन्हैयलालजोशिने,कर्णावत्यां स्वकीयं गृहग्रन्थालयं दर्शयित्वा मां विस्मयोदधौ निमज्जितवते श्रीहिमांशुजोशिनं च मह्यं परिचायितवते ''आर्.एच्.पटेल् कालेज् आफ् आर्ट्स् एण्ड् कामर्स्''विद्यालये संस्कृताध्यापकाय श्री अरुणकुमारमिश्राय, कर्णवत्यां मम निवासावसरे मम निवासस्थलं स्वयमागत्य परिमलप्रकाशने बहून् विचारान् परिचाय्य मम भुजास्फालनं कृत्वा प्रोत्साहितवते श्रीहिमांशुजोशिने च।

बेङ्गळूरवीये न्याषनल्कालेज्-के प्राचार्यस्तत्रभवान् ''विद्यानिधि'' बिरुदा-ङ्कितः के.एस्. कण्णन्वर्यो गालोडितपूर्वकमस्यां कृतौ निक्षिप्त-व्याकरणाञ्जनपूत-कटाक्षः सन् भाजनमस्ति मदीयाया अनल्पायाः कृतज्ञतायाः।

मन्त्रालयीयस्य राघवेन्द्रमठस्य पीठाधिपतीनां श्रीश्री १०८ श्री सुशमीन्द्र-तीर्थश्रीपादानां तथा तत्करकमलसंजातानां श्रीश्री १०८ श्रीसुयतीन्द्रतीर्थश्रीपादानां पादकमलयोः सादरं प्रणामान् समर्पयामि।

तेषामादेशानुसारेण तदाप्तकार्यदर्शी तत्रभवान् श्रीमान् राजा एस्. राजगोपालाचार्यवर्यः मूर्त इव ग्रन्थप्रकाशनोत्साहो विराजते। ग्रन्थान् रचयितॄन् प्रोत्साहयन् ग्रन्थप्रकाशनेन रचनायाः फलं लोकम् उपसर्पयंश्चैष महाभागः सूक्ष्मां दृष्टिं बिभ्राणो ग्रन्थान् कर्तॄणां मादृशां कृतज्ञतायाः पात्रमिति नापेक्षते किल सुविस्पष्टं गदनम्।

तिरुपतिस्थराष्ट्रीयसंस्कृतविद्यापीठस्य कुलपतिचरेभ्यः महाविद्वद्भ्यः श्री डि. प्रह्लादाचार्येभ्यः धन्यवादान् समर्पयामि ये स्वयं विरचितानेकग्रन्थाः सन्तो मादृशां प्रेरणामधिकतरामनिशमुत्पादयन्ति।

एतादृशग्रन्थानां मुद्रणादिव्यवहारेषु सश्रद्धं सोत्साहं च कर्तव्यभारं निर्वहन् प्राच्यविद्यासंशोधनालयीयो विद्वान् डा. डि.पि.मधुसूदनाचार्यो ममादरस्य पात्रमस्ति।

इदंप्रथमतया ग्रन्थोऽयं सुधर्मासंस्कृतपत्रिकायाम् १९८२ ईसव्याम् अवततार।

पुस्तकाकारेणादिमं मुद्रणमस्य मध्यप्रदेशीय-प्रख्याग्रन्थमालायां २००५ ईसव्यां संजातम्।

परिष्कृतं सदेतद् द्वितीयं परिष्कृतं जननं नवदिल्लीस्थपरिमलप्रकाशनद्वारा २००७ ईसव्यां प्राप्नोत्।

तृतीयवारमस्य पुनर्जन्म मन्त्रालयस्थराघवेन्द्रमठे २००९ ईसव्यां समभूत्।

तस्यैवाधुना प्रचारोऽस्ति विश्वस्मिन्।



## ANNOUNCEMENT

**Anybody may take this work for paper presentations in seminars/conferences/symposiums with proper acknowledgement.**

**Any body may take this work for Ph.D., with proper acknowledgement.**

**Anybody may discuss the work in any forum.**

**NOBODY IS PERMITTED TO TRANSLATE THE WHOLE WORK IN ANY LANGUAGE.**

**AUTHOR HAS PLANNED TO TRANSLATE IT INTO ENGLISH.**

**jgrantha@gmail.com**

**Price: Interest in modern Saṁskṛta literature, making the Ābhāṇakas by heart, using them in conversation as well writing.**

**jgrantha@gmail.com**



# विषयानुक्रमणिका





# आभाणकजगन्नाथः

*****

**सूत्रप्राया प्रासरम्या सदार्ढ्या**
**सोत्प्रासोक्तिः कन्नडाभाणकीया।**
**शैली नीतिस्फोरणायात्तजन्मा**
**नव्यग्रन्थोत्पादने देशिका मे ॥**

**आभाणकजगन्नाथे चाकचिक्येन चेतने* ।**
**प्रत्यग्रं स्पन्दते नाडी पुराणी चिरयौवना ॥**

## १.इदं हि जीवनम्

१. अन्धतामिस्रे ज्योतिरिङ्गण आस्फालयति पक्षौ।
२. इतो न लग्नम्, अतो न भग्नम्।
३. कुम्भकारस्य कृपा नाम शिरसि मृदाऽभिषेकः।
४. कोलः कथं चलतु केनिपातनं विना ?
५. गजोन्नतिदर्शनेन निजोन्नतिर्न ।
६. तैलिकस्य दयाहेतोः शिरः किं शीतलायते ?
७. पङ्क एव पङ्कजस्य पिता।

*चेतने-सजीवे।१.१.अन्धतामिस्रे-निबिडेऽन्धकारे।१.४.कोलः-उडुपम्।केनिपातनम्-अरित्रम्(उडुपस्य जले नोदनायोपयुज्यमानो दण्डाकारकः सामग्रीविशेषः)।१.६.तैलिकस्य-तैलेन आजीविकां निर्वहतः।

८. पीयूषमप्यस्तु पिचुमन्दोऽप्यस्तु।

९. मत्स्यमारणेन मत्स्यरङ्कस्य जीविका।

१०. मृतो वेतालः स्थितो ब्रह्मराक्षसः।

११. रोषतो दह्यते किं गौर्मूषकाशिनिवृत्तये।?

१२. लोको मुत्पाकोत्सवश्च बहुशोकोद्धुरश्च।

१३. लोतकमुष्णं च शीतं च।

१४. वल्ल्युपरि वृक्षः पतितः।

१५. वस्तुस्थितौ कथितायां व्याघ्र इव लङ्घते।

१६. वृष्ट्या क्षुपोऽपि जायते, कर्दमोऽपि जायते।

१७. व्याघ्रे नष्टेऽपि व्यन्तरो न नष्टः।

१८. संपुञ्जिते सर्षपराशौ तिलमेकं पतितम्।

१९. सुखं नखदघ्नं, दुःखं मुखदघ्नम्।

२०. सुत्रामपुरे सर्वदा वित्रासनम्।

२१. ह-ह्ह-ह्हेति, हन्त हन्तेति-देवेन दत्तमुभयम्।[२१]

## २.लोकः

१. अन्येषां शर्मणा मम भर्मप्राप्तिः किम् ?

२. अबद्धानां पुराणानाम् अशीतिर्लाङ्गूलानि।

३. अभिधानेन लोको ह्यभिरामः।

१.८.पिचुमन्दः-निम्बः।१.९.मत्स्यरङ्कस्य(=Kingfisher)।१.११. मूषिकाशी-बिडालः।१.१३.लोतकम्-अश्रु।१.१६.क्षुपः-वृक्षस्य प्रारम्भावस्था। १.१७.व्यन्तरः-पिशाचविशेषः।१.१९.दघ्नम्-परिमाणम्।१.२०.सुत्रामपुरे-इन्द्रनगर्यां, स्वर्गे।वित्रासनं-भयम्।२.१.भर्म-सुवर्णम्।





४. आक्रुश्य सग्ध्यर्थम् आमन्त्रणं प्राप्नोति।

५. उद्वेगेन हृद्वेदना।

६. एकस्याः कथायाः पञ्चाशत् पुच्छानि।

७. क्रोशन्तमपि द्राङ्क्षन्तमपि हरिणं हरिर्न जहाति।

८. क्षुद्रा आद्रियन्ते, वीध्रबुद्धयो विद्राव्यन्ते।

९. खर्जूरे दृष्टे खर्जू रसनायाः।

१०. गवे पङ्गवे गोष्ठं भिन्नम्।

११. चान्दनेनापि दण्डेन ताडितानां चीत्कारो निःसरत्येव।

१२. चिन्तायाः समाप्तिश्चिताया उपरि।

१३. ताटकायाः खर्जूरस्ति चेत्पाटकाक्षरं मया द्राङ्क्षणीयं किम् ?

१४. ताडने वटदण्ड-वंशदण्डयोः को भेदः ?

१५. तुथानामप्यात्मकथायां व्यथा वर्तत एव।

१६. दरिद्रस्य जठरं भारः, धनिकस्य द्रविणं भारः।

१७. दुष्टा अपि बत बत, शिष्टाभीष्टाः।

१८. देवो यद् यच्छति, देवलात् तद् गच्छति।

१९. धूतध्वान्ता विष्टपे भानुभासः
क्षीणप्राणा गह्वरोपह्वरेषु।

२.४.सग्धिः-सहभोजनम्।२.७.हरिः-सिंहः।२.८.वीध्रबुद्धयः-विमलमतयः। २.१३.पाटकाक्षरम्-‘तकिटतोम्’ इत्यादिर्नृत्येषु उपयुज्यमानोऽक्षरसमूहः। २.१५.तुथानाम्-बलिष्ठानाम्।वैदिकोऽयं शब्दः।केषुचन मन्त्रेषु अग्निपर्यायत्वेन शब्दोऽयं प्रयुक्तः।*On the mystic Tutha*.P.D.Navathe. Indian Antiquary III.1-4 R.N.Dandekar Felicitation volume. २.१९.धूतध्वान्ताः-नाशितान्धकाराः।गह्वरोपह्वरेषु-गुहायाःसमीपेषु रहसि वा।

२०. नरोऽन्यः शूलीति शिरो मम शिलायां घट्टनीयं किम्?

२१. नादत्ते नाविकः किमातरं कातरात् ?

२२. परगृहीयंरन्ध्रंकर्णरसायनं,स्वगृहीयं छिद्रं कर्णारुन्तुदम्।

२३. पापिष्ठानां पादेषु पुष्पोपहारः।

२४. प्रत्यग्रेण जलेन पुराणः कर्दमः प्रवाहितः।

२५. भक्तेषु भैरवेषु भवत्सु भगवान् भीरुर्भवति।

२६. भर्म दत्वा भर्त्सनां कारयते।

२७. मम कष्टं मम कृते बंहिष्ठम्।

२८. मयूरस्य चार्यां चिन्ता मर्कटस्य चौर्ये चिन्ता।

२९. महादेवतासु मृदं खादन्तीषु क्षुद्रा देवताः क्षुधा क्षुभ्यन्ति।

३०. मुद्गराद् घातो हृद्गराद् वरम्।

३१. लिखिते सकले कवने, क्रुष्टं सर्वं गानम्।

३२. लोकज्ञानां पाण्डित्यं नास्ति पण्डितानां लोकज्ञानं नास्ति।

३३. वञ्चके विश्वस्य विमलाशये विचिकित्सति।

३४. विष्टिकरणेऽपि विविधा निन्दा।

३५. शिरस्स्वन्येषां स्फूर्जथौ पतिते करः किं मम कर्तनीयः?

३६. शुभ्रमतिः श्वभ्रे पतति।

३७. सग्धये निमन्त्रणं समाप्नुवन्ति चीत्कृत्य।

२.२०.शूली-शिरःशूलादिपीडायुक्तः।२.२१.आतरम्-नौकाप्रयाणशुल्कम्।
२.२४.प्रत्यग्रेण-नूतनेन।२.२७.बंहिष्ठम्-बहुलम् (अष्टा.६.४.१५७)२.२८.
चार्याम्-नृत्यभङ्गीविशेषे।२.३०.हृद्गरात्-हृदये वर्तमानाद् विषात्।२.३३.
विश्वस्य-विश्वासं कृत्वा।विचिकित्सति-संशेते।२.३४.विष्टिः-विना वेतनम्।
२.३६.श्वभ्रे-नरके।२.३७.सग्धये-सहभोजनाय।





३८. सत्त्वगुणभक्तास्तमोगुणशक्ताः।

३९. सदा वक्रं सारमेयपुच्छम्।

४०. सम्मार्जन्या साधूनां समाराधना।

४१. सर्वेषां कटु मरिचम्, एतेषां कटु पायसम्।

४२. सेवकाः प्रत्यग्राः प्रसेवं प्रकर्षेण घट्टयन्ति। [६३]

## ३.एवमपि कदाचित् ।

१. उक्तिभिरोषाः कृतिपीयूषाः।

२. उद्भटा एव कदाचिदुद्भटाः।

३. करकाघातानन्तरं मधुपाताः।

४. कुरङ्गः क्रोष्टृवद् भवति।

५. खरस्याक्रोशं श्रुत्वा कुहूरवः शिरोऽकम्पयत।

६. गिरिकायाः पुरस्ताद् गोमायोर्माया गतासुरभूत्।

७. दग्धाद् घटादामः कुम्भो दृढतरः।

८. द्विष्टाः कदाचिन्मिष्टं पाययन्ति।

९. नवनीताज्ज्वाला निस्सरति।

१०. प्रतिमायोगी प्लवङ्गमति।

११. भानुः प्रतीच्यां भासते।

२.४२.प्रत्यग्राः-नूतनाः।३.१.ओषाः=तापकाः।वैदिकोऽयं शब्दः।
३.४.क्रोष्टृवत्-शृगालवत्।३.५.कुहूरवः-कोकिलः।३.६.गिरिका-बाल-
मूषिका।३.६.गोमायोः-शृगालस्य।३.१०.प्रतिमायोगो नाम प्रतिमावद्
दैहिकः कम्पलेशोऽपि यथा न स्यात् तथा स्थित्वा ध्यानानुष्ठानम्।
बाहुबलिनः प्रतिमायोगः प्रख्याततमः।तादृशयोगवान् प्रतिमायोगी।

१२. मत्कुणात् कम्प्रा मातङ्गेन युयुत्सन्ति।

१३. मितौ नष्टायां मुसलेन संभाषे।

१४. मुसले किसलयः।

१५. यज्ञे दग्धं यजमानस्य श्मश्रु।

१६. विश्ववेदसो विचित्रचरित्राः।

१७. वृद्धा विदग्धाः पाकैर्दग्धाः।

१८. वैनतेयं वेतण्डो लङ्घनेन विस्माययति ।

१९. शशकं दृष्ट्वा शललः शल्यानि तेजयति।

२०. सिंही सूकरं सूते।

२१. स्थगिता वृष्टिः स्थगितो पातो न
विटपिदलगतबिन्दूनाम्। [८४]

## ४.अज्ञानम्

१. अज्ञाननिगूहनं विज्ञानविशेषः।

२. अटनमकृत्वा रटति।

३. अर्धबोधो बाधः।

४. अलंकारविद्यार्थिनो बलं वदनपिधानम्।

---

३.१२.युयुत्सन्ति-योद्धुमिच्छन्ति।युध्+सन्।३.१६.विश्ववेदसः-विश्वप्रज्ञाः। वैदिकोऽयं शब्दः।३.१७.पाकैः-अल्पवयस्कैः डिम्भैः।दग्धाः- लक्षणया पराजिताः।३.१९.शललः-देहे शललानि (कण्टकान्)धरन् चतुष्पात् प्राणि-विशेषः।एष भीतः सन् स्वकीयानि शललानि शत्रौ क्षिपति।तेजयति-तीक्ष्णीकरोति।३.२१.वृष्टिः स्थगिता,वृक्षपत्रगतानां जलबिन्दूनां भूमौ पातस्तु न स्थगितः।४.४.अलंकारविद्यार्थिनः-अलंकारप्रियस्य विद्यार्थिनः।





५. एडमूकः पित्रोः पीडनाय।

६. ज्ञानहीनस्य श्मश्रु मानरक्षणाय।

७. “रे हय ” इत्युक्ते “हे वय ”मिति प्रत्युत्तरति।

८. वामहस्ताङ्गुलीविदग्धस्य पुरस्तादज्ञानी सर्वज्ञः।

९. सामिज्ञानं संकटाय। [९३]

## ५.धर्मसंकटम्

१. इष्टा बन्धवः कष्टा च धान्यहानिः।

२. भक्ष्ये रक्तिर्भिषजि च भक्तिः।

३. भिस्सटायास्त्यागे प्रीतिभङ्गः,भोगे स्वास्थ्यभङ्गः।[९६]

## ६.अतिमार्दवम्

१. उपलहृदयानां द्वारि उत्पलहृदया भिक्षन्ते।

२. करी मृदुवचनः कबलितः काकेन।

३. भीरूणां शशकानां तृणकम्पोऽपि व्याघ्रझम्पः।

४. मल्लिकया सह मल्लयुद्धम्।

५. मशको महानादेन महिषस्य कर्णकुहरं भनक्ति।

६. मृदमदन्ति मृदुललिताः।

७. सर्वं सहमाना गर्ववद्भिर्गीर्यन्ते।

---

४.५ एडमूकः-वक्तुं श्रोतुं चाशिक्षितः।४.८.वामहस्ताङ्गुलीविदग्धस्य-निरक्षरभट्टाचार्यस्य।४.९.सामि-अर्धम्।५.३.भिस्सटायाः-दग्धस्योदनस्य।५.१.उपलहृदयानां-कठिनमनस्कानाम्।६.३.झम्पः-jump.

८. सुलभ्यः सार्वभौमः खलपूनां पादसंवाहकः।[१०४]

## ७.अतिभाषणम्।

१. कथां कृत्वा व्यथां विस्तारयति।
२. कथायाः शृङ्गमपि नास्ति, लाङ्गूलमपि नास्ति।
३. कुवित् कत्थते, कुत्सितं श्रन्थते।
४. परवार्तैव वाचाटानां विश्वम्।
५. परुषवचनानां प्रतिपदं प्रतिपक्षाः।
६. वाग्यतो वर्तमानानां पुरस्ताद्वाचाटानां नरकदर्शनम्।
७. वाचाटानां बहुकपटानां बहुलं शूषं गच्छति शोषम्।
८. शृगालस्यापेक्षया लाङ्गूलमेव दीर्घतरम्। [११२]

## ८.मौनम्

१. असति ज्ञाने मौनेन मानः।
२. कदाचिन्मौनेन कृपीटयोनिर्ज्वलति।
३. मौनवीरा मेरुं गिलन्ति।
४. मौनव्रते सति किमर्थं मण्डूकेन सख्यम् ?
५. मौनेन कनकाभिषेकोऽपि, कर्दमाभिषेकोऽपि।
६. मौनेन मानो न मीयते।

६.८.खलपूनां-सम्मार्जन्या मालिन्यपरिमार्जकानाम्।७.३.कुवित्-बहु। वैदिकोऽयं शब्दः।श्रन्थते-शैथिल्यमाप्नोति।७.६.वाग्यतः-मौनेन। ७.७.शूषं-बलम्।वैदिकोऽयं शब्दः।८.२.कृपीटयोनिः-अग्निः।लक्षणया क्रोधः।मौनं क्रोधस्य कारणं संभवतीत्यर्थः।





७. मौनेन मूढा जेतव्याः।
८. सर्वदा मौनं गर्वसंसूचनम्। [१२०]

## ९.अतिरेकः

१. अतिकरणान्मतिभ्रंशः।
२. अतिनाट्ये मतिधूर्तता।
३. अतिपठनं गतिहीनम्।
४. अतिपरिचयेन बन्धुरन्धुः संवृत्तः।
५. अतिबुद्धिमताम् अधिकं मौढ्यम्।
६. अतिभुग्नं भग्नम्।
७. अतिमथनेन चन्दनादप्यग्निर्धगधगायते।
८. अतिमैत्री धर्मसंकटाय।
९. अतिशुद्धम् असंबद्धम्।
१०. रपःप्राचुर्यमपि राक्षसेषु जीर्यति।
११. स्नेहातिरेके मोहातिरेकः। [१३१]

## १०.अत्याशा

१. करो दीर्घो, जिह्वा दीर्घतरा।
२. गजे दत्ते, भूतिर्न दत्तेति व्याघ्रासने तिष्ठति।

९.४.अन्धुः-कूपः।९.६.भुग्नं-वक्रम्।९.१०.रपः-विषम्।शौनक-शाखायां (६.९१.२)वर्तमानस्यास्य शब्दस्य संवादितया पैप्पलादशाखायां(१.१११.१) विषमिति शब्दो दत्तः।"Nature of Vedic *śākhās*" (The Poona Orientalist. XVI. No.1 to 4) सुधीरकुमारगुप्तः।

३. भक्ष्यमप्यस्तु, भर्माप्यस्तु।
४. मोदकं परिवेषितो मूषिको मरिचमप्यस्त्विति घुरति।
५. वपुर्मृदि लुठति, वाञ्छा हेमाद्रिं ह्लेपयति।
६. विद्रुमे वीक्षिते वैडूर्यं न विलोकितमिति विलपति।
७. सुभोजने दत्ते सभाजनं नास्तीति तकधिणुतोम्।
८. सैन्धवाय घासं देहीत्याज्ञप्ते,सादी बुभूषामीति वदति।
९. हरिद्रासस्ये यदि हिरण्यबीजमभविष्यत्..! [१४०]

## ११.अपात्रदानम्।

१. वर्णिले चीनाम्बरे दत्ते वानरासनं करोति।
२. वल्गुलिकायै पीताम्बरं प्रत्तम्। [१४२]

## १२.निराशा

१. आकाशात् पतिता देवता स्तोकाशां त्यक्त्वा साक्रोशा रोदिति।
२. उपसृप्तो मेरुरस्मानेव ऋणं याचते !
३. करगतं कवलं मुखगतं नाभूत्।
४. कुबेरस्य पुरस्ताद् भिक्षापात्रे प्रसारिते कपर्दिकां क्षिप्तवान्।

---

१०.२.भूतिः-गजालङ्कारः।१०.३.भर्म-सुवर्णम्।१०.४.घुरति-घुर शब्दे तुदादिः। १०.५.ह्लेपयति-लज्जयति १०.८.सादी-अश्वारोही।११.२.वल्गुलिका-Cock-roach ।१२.१.स्तोकाशाम्-अल्पामप्याशाम्।





५. के प्रार्थिते करकाः पतिताः।
६. गुरुरिति श्रितोऽस्माभिर्गुर्गुरायते।
७. नर्तनं चिकीर्षुर्गर्ते न्यपतत्।
८. निर्मितिकुशला निद्रासने निरताः।
९. परितो लम्बमानानि फलानि प्रमादादपि नास्ये पतन्ति ।
१०. पायसे मक्षिकापातः।
११. प्रणतः परमेश्वरः पादाभ्यां प्रहरति।
१२. बड्भणतां बुसचर्वणमेव भूरिभाग्यम्।
१३. बीजेऽनुप्तेऽपि बीजपूरं चिखादिषवो व्यादत्तास्याः शेरते।
१४. भग्नदन्तानां भूरि कामना चणकादने।
१५. भोगं लिप्सू रोगं प्राप।
१६. विजलं कूपं निखाय विगतासुरभवत्।
१७. विद्वानिति श्रितोऽस्माभिर्यद्वा तद्वा कत्थते।
१८. वेध्यमुत्तमाङ्गं, विद्धमुष्णीषम्।
१९. शिवोऽपि न दृष्टः शवोऽपि न दग्धः।
२०. शुण्डा छिन्ना, शलाटुशकलमपि न लब्धम्।
२१. हृद्गते भावे मुद्गरप्रयोगः। [१६३]

## १३.लोकनीतिः

१. अगारोहणात् प्रागङ्गबलं परीक्षणीयम्।

---

१२.५.के-जले। १२.१२.बट्-सत्यम्।वैदिकोऽयं शब्दः।१२.१३. व्यादत्तास्याः-तुण्डं विस्तृतं कृत्वा वर्तमानाः।१२.२०.शलाटुः-फलस्य पूर्वावस्था।

२. अजा घासान् विजानन्ति।

३. अ-नामितः क्षुपः किम् अगो भवन् नाम्यते ?

४. अपश्यति नयने किं बुद्धिर्न पश्यति ?

५. अवीक्षमाणेऽप्यम्बके सुवीक्षते स्वान्तम्।

६. असत्सु बुन्देषु बाणासनेन किम् ?

७. अस्थिताद् अमृतात् सुस्थितं कं वरम्।

८. आत्मश्लाघा कुहचिदमोघा।

९. आसादितेन हृदयमाह्लादय।

१०. ऊढा मत्तास्तथोन्मत्ता रीढाचिन्ताविवर्जिताः ।

११. कदनानि कृतानि रदनानां पतनाय !

१२. कनके लब्धे कषे चिन्ता।

१३. क्षुद्बाधायां किमुद्बल्यं खाद्यते ?

१४. क्रतवः शतं कृतयः कति ?

१५. खुरस्यास्तु खट्टुङ्कता।

१३.३.क्षुपः-वृक्षस्य प्रारम्भावस्था।१३.५.अम्बके-नेत्रे।१३.६.बुन्देषु-बाणेषु।वैदिकोऽयं शब्दः।बाणासनेन-धनुषा।१३.७.कं-जलम्। १३.८. कुहचित्-कुत्रचित्।अमोघा-अव्यर्था।१३.१०.रीढा-अवमानना।रीढावमाननावज्ञेत्यमरो न स्मर्यते किम्?तद्विषयिण्या चिन्तया विवर्जिताः। १३.१२.कषे-सुवर्णपरीक्षार्थमुपयुज्यमाने साधनविशेषे।१३.१३.उद्बल्यम्-उद्भिज्ज-बल्यम्=Tonic of plants= Manure ।मया सृष्टोऽयं शब्दः।यद्यपि कुणप इति शब्दोऽस्मिन्नर्थे सुरपालप्रणीते वृक्षायुर्वेदे गोचरीभवति,परन्तु तस्यास्मिन्नर्थेऽनतिरूढत्वात् शव इत्यर्थे च बहुलं प्रयुक्तत्वान्नवीनस्य शब्दस्य सृष्टये मया प्रयत्नो व्यधायि। १३.१४.क्रतवः-निश्चया इत्यर्थो वेदे।यज्ञा इत्यर्थस्तु भाषायम्।१३.१५.खट्टुङ्कता-परुषता, स्पर्शकठिनता।





१६. गलन्त्यां तैलमपि धीयते।

१७. गृध्रः किं गगनं गवेषते ?

१८. चापवते कोपो न कारयितव्यः।

१९. जडात्मनां कृते नीचा एव निलिम्पाः।

२०. तण्डुले तुषो नास्ति।

२१. तरणितप्तानां तरुरेवाश्रयो न च निजा छाया।

२२. तुवरीं विना कीदृशी यूषा ?

२३. तैलेन लिप्ते पादतले शीर्षं शीतलायते।

२४. दण्डहीनेन चण्डव्याघ्रो न कोपनीयः।

२५. दर्शनदुर्दुरूटाद् दूरं द्रुवस्व।

२६. द्राङ्क्षत्सु जनेषु दैवं हस्तं प्रसारयति।

२७. द्वयोः कोलाहले तृतीयस्य हालाहलम्।

२८. नयनं तुष्टं सर्वं मिष्टम्।

२९. नवे वयसि नगराजोऽपि नवनीतायते।

३०. नवीनभेषजापेक्षया पुराणरोग एव वरम्।

१३.१६.गलन्त्यां - जलाधानार्थे पात्रविशेषे।सत्याम् आवश्यकतायां तत्र तैलमपि आधातुं शक्यते। १३.१९.निलिम्पाः-देवाः।१३.२१.तरणिः-सूर्यः।१३.२२.यूषा-'सारु' इति कन्नडभाषायाम्।अनया मिश्रितस्य ओदनस्यादनं कर्णाटके नितरां प्रसिद्धम्।१३.२३.एतच्चानुभवसिद्धम्। १३.२५.दर्शनदुर्दुरूटात्-दर्शनान्यधीत्य सम्यगजानानाद् दुराक्षेपं च कर्तुः। 'कुत्सितानि कुत्सनै'(२.१.५३.)रिति सूत्रम्।तत्र 'मीमांसकदुर्दुरूट'इत्युदाहरणं दीयते।(' मीमांसकदुर्दुरूढ' इति पाठान्तरम्।)"यो मीमांसाम् अधीत्यान्यथा जानानो दुराक्षेपं करोति स एवमुच्यते"इति बालमनोरमायां वासुदेवदीक्षितः।तदनुकृत्या 'दर्शनदुर्दुरूट' इति शब्दो मया सृष्टः।

३१. निःश्रेणिकया किं वृक्षविहारविदग्धस्य वानरस्य ?
३२. निकृष्टे स्वकीये स्वर्णे नाडिन्धमा न निन्दनीयाः।
३३. निरुत्साहानाम् उरुगायः पन्थाः शय्या ।
३४. निर्घृणानामपि नाडी स्पन्दते।
३५. निशितबुद्धिं शास्त्राणि नमस्कुर्वन्ति ।
३६. निशिताऽपि छुरिका न्यग्रोधं न छिनत्ति।
३७. पङ्केऽवलोकिते पङ्कजमवलोक्यते।
३८. पटच्चरे गतो मानः पट्टचीरदानादपि न निवर्तते।
३९. परशुविद्या पामरहृद्या।
४०. पर्पटीमुत्पाट्य पर्वतमुत्पाटय।
४१. पीडायामपि पन्थानं पश्यन्ति पटुबुद्धयः।
४२. प्रत्नं भाषितं शस्तं, प्रत्यग्रं भूषितं शस्तम्।
४३. प्रत्यग्रहरिणापेक्षया पुराणः शशको वरम्।
४४. प्रसरन्तं पूतिगन्धम् अररं न प्रतिरुणद्धि।
४५. प्राप्तमेव पुरु पुण्यम्।
४६. फाले ताडिते फलं न खात् पतति।
४७. बुद्ध्यनुसारं भक्षय मा जिह्वानुसारम् ।
४८. भूते सदा वर्तमानाः प्रेता भवन्ति।
४९. मधु न स्रवति मरिचफलात्।

१३.३३.उरुगायः-श्रेष्ठैर्गेयः स्तुत्य इति यावत्।वैदिकोऽयं शब्दः।१३.३८ पटच्चरे-जीर्णवस्त्रे।१३.४२.प्रत्नं-प्राचीनम्।प्रत्यग्रम्-नवीनम्। १३.४४.अररं-कपाटम्।१३.४५.पुरु-अधिकम्।१३.४६.फाले-ललाटे।खात्-आकाशात्।





५०. मरणमेव मनुजानां शरणम् अन्तिमम्।
५१. महतां महान् क्लेशः।
५२. महाबलिनोऽपि कदाचिन्महाक्रोशं मुञ्चन्ति।
५३. महाभ्यासेन मायां मर्दयेत्।
५४. मुसलो हलं दृष्ट्वा मुखं साचीकरोति।
५५. मूषिकं जित्वा मृगाधिपं जय।
५६. यतोऽस्ति वृषावाक्, ततो न मृषावाक्।
५७. रथो न चलति रत्नगर्भां विना।
५८. राज्ञा गृहीता राराजन्ते।
५९. रोषवतामग्रे जोषमुपविश।
६०. लब्धमेव ललितम्।
६१. लोकोद्धारे शोकोऽनल्पः।
६२. वद सत्यं, वह कुणपम्।
६३. वर्म नास्ति धर्मदेवतायाः।
६४. वस्त्रशुद्धौ निर्णेजक एव निर्णेता।
६५. विदुरान्नीतिश्चतुराद् भीतिः।
६६. विश्वं वीक्ष्य विरोधं विजयस्व।
६७. व्याघ्रे तृणं खादति, वराहः किं करोतु ?
६८. शाखासु चङ्क्रमणं शाखामृगाणां प्रकृतिः।

१३.५४.साचीकरोति-वक्रीकरोति।१३.५६.वृषा वाक्-वीरवाणी।वैदिकोऽयं शब्दः।१३.५७.रत्नगर्भां-भूमिम्।१३.५९.जोषम्-गात्रसंयमपूर्वकम्। १३.६२.कुणपम्-शवम्। १३.६४.निर्णेजकः-रजकः।

६९. शिलीयया पूजया विलीयते किं दुर्गुणः ?

७०. शीर्षासनप्रयोगेऽपि निम्बकं न जम्बीरायते।

७१. शुकचञ्चूर्यदि दीर्घा विस्मयकारणमत्र,
बकचञ्जूर्यदि दीर्घा विस्मयहेतुः कोऽत्र ?

७२. शून्येऽरण्ये श्रान्तये शूरभावः।

७३. शेषेण पूर्णं कुरु।

७४. श्रान्तस्याश्वस्य शफः किं कर्त्यते ?

७५. संकटप्रसंगे स्वान्तधैर्यं संजीविनी।

७६. संशयालोः सुखं नास्ति।

७७. समयः सु-मयः कर्तव्यः।

७८. सर्वे शिबिकायामुपविविक्षन्ति, वोढारः के?

७९. सर्वेश्वरः किं दर्वी गृह्णाति ?

८०. सुष्ठु प्रारम्भः सुमुहूर्तः।

८१. सैन्यवतामग्रे दैन्यमेव सद्बुद्धिः।

८२. स्थाने कोपः स्वर्गं सृजति।

८३. स्नुही मरुप्रियाणां स्वादीयसी सुधा।

८४. स्वकीये स्वप्ने साम्राज्यानि सृज।

८५. हृदयजय एव वास्तविको जयः।

८६. हृदयशुद्धिं वदनं वदति। [२४९]

१३.७२.शूरभावः-शौर्यम्।१३.७८.उपविविक्षन्ति-उपवेष्टुम् इच्छन्ति।
१३.८३.स्नुही-कॉक्टस्(cactus)।'कळ्ळी'इति कन्नडे।मरुप्रियाणाम्-उष्ट्राणाम्।





## १४.अनौचित्यम्।

१. आखूनां रक्षणार्थम् आखुभुङ् नियुक्तः।

२. उरसि शोकभराणामुपनिषदामुपदेशः।

३. चोराय भूरिदानम्।

४. जालकाद् भीत्वा ज्यैष्ठिकेन युयुत्सति।

५. पादावन्यस्य पादरक्षे चान्यस्य।

६. बाष्पं मुञ्चतामग्रे बुद्धस्यार्यसत्यानि।

७. शुचा मौनिनां पुरः शाखामृगीयं नृत्यम्।

८. शूर्पणखायै ताटङ्कमुपायनम्। [२५७]

## १५.न त्वर्यताम्

१. अरणा बुभूषवश्चरणविपर्यासाद् धरणौ पतिताः।

२. त्वरा क्रियतां, गर्ते पत्यताम्।

३. मन्दं मन्दं महासिद्धिः।

४. विलम्बो बभूव, विशुद्धिर्बभूव।

५. सत्वरं गत्वराश्चत्वरे भ्रंशन्ते।

१४.४.जालकात्-ऊर्णनाभेः।ज्यैष्ठिकेन-मल्लेन।१४.६.आर्यसत्यानि-मुमुक्षुणाऽवश्यं ज्ञेया दुःखसमुदयनिरोधमार्गाः।एते स्वयं बुद्धेनैवोपदिष्टा इति बौद्धानां श्रद्धा।१४.७पुरः-अग्रे।शाखामृगीयम्-कपिरचितम्।१५.१.अरणाः-असमानाः।अनितरगोचरसामर्थ्यवन्त इति यावत्।वैदिकोऽयं शब्दः।शौनकशाखायां प्रयुक्त-स्यारणशब्दस्य (१.१९.३)पर्यायत्वेन पैप्पलादशाखायाम् असमानशब्दः (१.२०.३) प्रयुक्तः। "Nature of Vedic *śākhās*"(The Poona Orientalist. XVI.No.1to4)सुधीरकुमारगुप्तः।१५.५.गत्वराः-गमनशीलाः।चत्वरे-चतुष्पथे।

६. सहसा कृत्यं तरसा चित्यम्। [२६३]

## १६.तस्माज्जागृत जागृत

१. अवनिराकर्णयति।
२. अ-विदितानामालिङ्गनं लवित्रेण लाङ्गूलच्छेदनाय।
३. इक्षुरसे मधुरे किम् इक्षुयन्त्रं मधुरम् ?
४. कपिना साकं क्रीडा वा व्रीडा वा ?
५. कुञ्जराणां दर्शनं कमलानां रोदनाय।
६. केषाञ्चिल्लाङ्गूलं शृङ्गात् तीक्ष्णतरम्।
७. क्रमेण व्याघ्रो वानरोऽभवत्।
८. क्रोशस्थोऽपीक्ष्यतेऽक्ष्णोः कथमपि कुध्रः प्रस्तरक्षेपदूरः।
९. गवाक्षाणां श्रवाः सन्ति।
१०. घटद्वयसं क्षीरमाशु स्फुटति चिञ्चाबिन्दुना।
११. चषकं नव्यं यत्र च गव्यम्।
१२. दन्तदर्शने नान्तर्दर्शनम्।
१३. नक्तं शुक्तिर्मुक्तया सङ्ख्यसज्ज्ञा।
१४. बालव्रणो ब्रह्मराक्षसः।
१५. भानुमण्डलेऽपि तमःखण्डोऽस्ति ।

१५.६.तरसा-वेगेन।चित्यम्-मृतम् (अभिधानचिन्तामणिः)।१६.२.लवित्रेण-कर्तनार्थेन साधनविशेषेण।१६.८.कुध्रः-पर्वतः।१६.९.श्रवाः-कर्णाः। १६.१०.घटद्वयसं-घटप्रमाणकम्।स्फुटति-भिन्नं भवति।चिञ्चायाः-तिन्त्रिण्याः,लक्षणया तद्रसस्य बिन्दुना। १६.११.चषकम्-पानपात्रम्। १६.१३.नक्तं-रात्रौ।सङ्ख्यसज्ज्ञा-सङ्ख्याय युद्धाय, सज्ज्ञा-सन्नद्धा।





१६. भिन्ने स्वान्ते बन्धनं क्लेशसाध्यम्।
१७. मर्त्या द्विकर्णा भित्तिस्त्रिकर्णा।
१८. मषीबिन्दुनिपातेन मदनो मर्कटायते।
१९. महतामन्तरङ्गे गहना कुहना।
२०. महामहोपाध्यायो महोपद्रवकारी।
२१. महाशा मोघाशा।
२२. माननाशाय महामानवैर्मैत्री ।
२३. मुक्तिकाभ्रान्त्या शुक्तिकायै पट्टाभिषेकः।
२४. मुञ्चति जलूका नाञ्चति नक्षत्रिकः।
२५. रसज्ज्ञा रसान् विरसयति।
२६. लालनार्थो गर्दभपोतः पालकं पाडयति।
२७. लालितः सारमेयो लीलया दशति।
२८. लालितो मूषिको लुलायो बभूव।
२९. विटपिनि फलपूर्णे प्रस्तरैर्हा ! प्रहारः।
३०. विदितं मौल्यं वज्रे नष्टे।
३१. विदिता देवता विपर्यस्ता जाता।
३२. शैवालच्छन्नस्तटाको गभीरो वाऽऽश्यानो वा ?

१६.२१.मोघाशा-व्यर्थाशा।१६.२४.जलूका-रक्तं बलवच्चूषन् कृमिविशेषः। अञ्चति-गच्छति।नक्षत्रिकः-हरिश्चन्द्रोपाख्याने हरिश्चन्द्रं धनाय बहुधा पीडितवान् विश्वामित्रशिष्यः।१६.२५.रसज्ज्ञा-जिह्वा।१६.२६.पाडयति-पादाभ्यां ताडयति।पाड लत्ताप्रहारे इति नवीन एष धातुर्मयैव सृष्ट इति ज्ञेयम्।१६.२८.लुलायः-महिषः।१६.३२.आश्यानः-पेलवः,गभीरत्वधर्मप्रतियोगी।

३३. सुखदाः किं कोकिलस्य नखराः प्रखराः ?

३४. स्मयमानाः क्षयहेतवः।

३५. हननं घातकस्य धर्मः।

३६. हस्तिपकं सादी जयति।

३७. हस्तिना दोषे कृते हरिणस्य हर्षो हतः।

३८. हासयन्तो हाहाकारयन्ति।

३९. हुडोः कशेरुकं हरेर्हिन्दोलाय।

४०. ह्रस्वाऽपि जिह्वा हानिं दीर्घां करोति। [३०३]

## १७.स्वयंकृतापराधः

१. अङ्गारेण साकं शृङ्गारलीला।

२. अञ्चले बद्धश्चञ्चलः कपिः।

३. अन्तरेहि व्यन्तर !

४. काकोदरस्य बिले करं प्रसारयति।

५. धनेन क्रीतो दार्वाघाटो दिवारात्रं कुष्णाति।

६. धूलिमुत्थाप्य दृष्टिर्दूषितेति द्राङ्क्षति।

७. पथिकायै पूतन्यै प्रणामपुरःसरम् आमन्त्रणा।

८. लङ्कां गत्वा पङ्के मग्नः।

९. शिलाऽन्विष्यमाणा शिरसि निपतिता।

१६.३९.हुडोः-मेषस्य।कशेरुकं-पृष्ठास्थि।हरेः-सिंहस्य।हिन्दोलाय-दोलारचनार्थम्।उपयुज्यत इति शेषः।प्रबलाः दुर्बलान् हिंसन्तीत्या-कूतम्।१७.३.व्यन्तरः-पिशाचविशेषः।१७.४.काकोदरस्य-सर्पस्य। १७.५. दार्वाघाटः-Woodpecker. कुष्णाति-चञ्च्वा प्रहरति।





१०. सदनं समागतायै सौभाग्यलक्ष्म्यै सपदि चपेटिका।

११. हठं कृत्वा रामठं गिलति। [३१४]

## १८.अनिच्छा

१. अनभीष्टाः कदाचिदमृतेन शिरस्यभिषिञ्चन्ति।

२. अनभीष्टायै देवतायै निवेद्यताम् अपक्वो गोधूमः।

३. अनभीष्टोऽतिथिरन्ने पतिता पुत्तिका।

४. जलं दृष्ट्वा कम्पमानानां माघकाले हिमप्रक्षेपः।

५. नेच्छामीति पूर्वं द्राङ्क्षित्वा पश्चान्नोज्झामीति क्रोशति।

६. 'मा''मा'इति क्रोशतां मस्तके मातुलुङ्गेन घट्टनम्। [३२०]

## १९.अनुकरणम्

१. कविना काव्ये कृते कपिना कापेयं कृतम्।

२. गजस्य पदचिह्ने दृष्टे गरुडस्य पदवी दृश्यते वा ?

३. गिरिधरेण गोवर्धने वोढे काष्ठामल्लाधीशेन काष्ठा वोढा।

४. गोविन्देन महागिरौ वोढे ग्रामीणेन मृत्पिण्डं वोढम्।

५. ज्येष्ठानां व्यसनं जनतायां संक्रमते।

६. ज्येष्ठानाम् अनुकृत्या जगती सर्वा जीर्णा।

७. ज्येष्ठेषु पतितेषु जगती पतिष्यति।

८. ध्वंसोऽस्तु ध्वाङ्क्षस्य, हंसोऽनुक्रियताम् ।

१७.११.रामठम्-हिङ्गु।१८.५.न उज्झामि-त्यजामि।१९.८.ध्वाङ्क्षस्य-काकस्य।

९. परमसुन्दरीं नर्तकीं दृष्ट्वा पङ्गुः पाशबद्धो पादपे ललाग।
१०. महिषो मयूरवन्नृत्यन् पतित्वा अस्थि बभञ्ज।
११. योगिना पीयूषे पीते विदुषा विषं पीतम्।
१२. संपन्ने नृत्यति दरिद्रो झम्पं विदधाति।
१३. सिंहस्य गर्जनं श्रुत्वा ग्रामसिंहः " भौ भौ" इति अभषत्। [३३३]

## २०.अपकर्षः

१. कण्टकेन विद्धः कण्ठीरवस्य कण्ठः।
२. जातः स्तम्भो ज्यैष्ठिकेन्द्रस्य बाह्वोः।
३. तिमिङ्गिलः कूपे तङ्कति।
४. भूमेरुपरि गिरिः, गिरेरुपरि मेरुः,मेरोरुपरि मूषिकः।
५. मघवन्मातङ्गं मृष्ट्वा महाश्वेता महामेचका जाता।[३३८]

## २१.अपर्याप्तिः

१. कुम्भकर्णस्योदराय कथमलं पिपीलिका ?
२. कृकनाले न स्रवति कुक्षिं वा न स्पृशति ।

१८.९.पादपे-वृक्षे।१९.१२.झम्पम्-Jump।१९.१३.ग्रामसिंहः-श्वा।२०.१. कण्ठीरवस्य-सिंहस्य।२०.२.स्तम्भः-देहचलनं रुन्धन् जाड्यविशेषः।ज्यैष्ठिकेन्द्रस्य-मल्लाधीशस्य।२०.३.तङ्कति-कृच्छ्रेण जीवति।तकि कृच्छ्रजीवने।२०.५. मघवन्मातङ्गं-ऐरावतम्। मृष्ट्वा-स्पृष्ट्वा।महामेचका-महाकृष्णा।२१.२.कृकनाले-कण्ठनालिकायाम्।आहार इति शेषः।परिवेषित आहारोऽत्यल्पमात्र इत्यर्थः।





३. घटदघ्ने जले घटा किं घटयतु ?
४. ताटकां कथं तर्पयतु कीटकः कीकटायाः ?
५. नार्द्रं गलबिलं,न तृप्तमुदरम्।
६. सदा व्यादत्तास्यानां सहस्रं हरिणा नालम्।
७. हिडिम्बाया उदरं हेमलेन किं तृप्यति ? [३४५]

## २२.अर्थापत्तिः

१. अवनीं शासताम् अर्भको न भारः।
२. इभं भक्षयताम् इन्द्रगोपः कियान् ?
३. एजते न राजतो, वेपते न वाहिन्याः,कम्पते किं चम्पकात् ?
४. करिणं कबलीकुर्वाणानां हरिणः कियान् ?
५. तृणेन ताडयन् किं मुसलेन नाघट्टयति ?
६. दन्तहीनो दर्वीं दशन् दंष्ट्रावान् सन् द्रप्सं किं त्यजति?
७. पुच्छेनैव चोरयन् शुण्डया किं न गृह्णाति ? [३५२]

## २३.अर्थानापत्तिः

१. अ-पिपीलिकाप्रवेशे सूचीरन्ध्रे महिषो मिमङ्क्षति।

२१.३.घटदघ्ने-घटपरिमाणे।घटा-गजानां वृन्दम्।२१.४.कीकटायाः-प्रदेश-विशेषस्य।२१.६.व्यादत्तास्यानां-अधिकेन परिणाहेन उद्घाटिततुण्डानाम्।२१.७. हेमलेन-सरटेन(=कृकलासेन)।२२.१.अर्भकः-शिशुः।२२.२.इन्द्रगोपः-वर्षाकाले दृश्यमानः कीटविशेषः कृष्णकायः,रक्तपट्टिकया चोज्ज्वलः।'कप्परशुण्ठी' इति कन्नडे।२२.३.एजते-कम्पते।राजतः-राजकारणात्।राजन्+तसिल्। वाहिन्याः-सेनाकारणात्।२२.६.द्रप्सं-शिथिलं दधि।२३.१.मिमङ्क्षति-मङ्क्तुमिच्छति।

२. अबद्धमतिः सन् बुद्धमुपन्यस्यति।
३. करिणाऽनुद्धरणीयं वृक्षं हरिणः कथमुत्पाटयति ?
४. कर्णे कृत्ते कुण्डलं कुत्र धार्यम् ?
५. कुन्तेन सूचीकर्म न शक्यते।
६. कृत्तपाजस्कानां कररेखाः कथं द्रष्टव्याः ?
७. पर्पटीदशनेन भग्नदन्ताः कर्परं कथं गिलन्तु ?
८. पाजो नास्ति, राजोत्तमः कथं भवेत् ? [३६०]

## २४.हन्त ! भाग्यं जनानाम्

१. अचिन्तितः पद्मरागः पाणौ पतितः।
२. काकघूकयोर्दण्डादण्डि, भेकानां च हल्लीसकम्।
३. भस्मनि लुठतां भर्मावाप्तिः।
४. मरिचेनारम्भः समाप्तौ करम्भः।
५. मरुभुवि तङ्कतां मन्दाकिनी लब्धा।
६. मोदेऽबाधे मेदिनी मध्व उत्सः।

२३.४.कृत्ते-खण्डिते।२३.६.कृत्तपाजस्कानां-कर्तितबाहूनाम्।पाजश्शब्दो वैदिकः। अस्य शब्दस्य बाहुरित्यर्थः केषाञ्चित्। *Vedic pājas and its cognates* by Madhusudan Mishra. Saṁskṛta-vimarśa 1.1 July 1973 Pp.81-83 Rāṣṭriya Saṁskṛta Saṁsthāna, New Delhi तदनुसारेण रचितोऽयमाभाणकः।सायणादीनामनुसारेण तु बलं तेजो वेति तदर्थः। तदनुसारेणाष्टम आभाणको रचितः।२४.७.कर्परम्-घटस्य शकलम्। (घट-कर्परकाव्यं स्मर्यताम्।)२४.२.हल्लीसकम्-मण्डलनृत्यम्।२४.४. करम्भः-घृतेन दध्ना वा मिश्रिताः सक्तवः।वैदिकोऽयं शब्दः।२४.६.मध्वः-मधुनः। षष्ठी।वैदिकः प्रयोगः।उत्सः-भूमित ऊर्ध्वं निष्यन्दः।





७. लताऽन्विष्यमाणा स्थिता पादपृष्ठे।
८. शतक्लेशानन्तरं शग्मासोऽनुभवाः।
९. शौण्डिकस्य श्लीपदे जाते शुभ्रशीलानां हुलुहुली।
१०. सक लं सुखलम्।
११. सीसकं लिप्सोर्हीरकं लब्धम्।
१२. स्वल्पारम्भे स्वर्णप्राप्तिः।
१३. स्वल्पे क्लेशेऽनल्पं भाग्यम्। [३७३]

## २५.श्रमः

१. पादे पीडिते पाणौ पीयूषम्।
२. मूले जलं पचेलिमं फलम्।
३. रुदिते चरणे मुदितं हृदयम्।
४. शरीरे स्वेदः शीर्षे मोदः।
५. श्रान्तिः शान्तिं प्रसूते।
६. हीरहारेण कन्धराया भारेऽपि चारुता । [३७९]

## २६.श्रमराहित्यम्

१. उम्भितो घटो जृम्भणे कृते।
२. व्यादत्ते वदने पतिता पर्पटी। [३८१]

२४.८.शग्मासः-सुखकराः।वैदिकोऽयं शब्दः।२४.९.शौण्डिकस्य-मद्यपस्य लक्षणया नीतिभ्रष्टस्य।श्लीपदे-गजपादवत् पादयोरतिस्थौल्ये (व्याधिविशेषे)जाते।हुलुहुली-मङ्गलध्वनिः(वैजयन्ती ३.६.५७.)।२४.१०.सुखलम्-सुख+लच्- सुखयुक्तम्।२५.२. पचेलिमं-पक्वम्।२६.१.उम्भितः-पूर्णः।२६.२.व्यादत्ते-अधिकतया उद्घाटिते।

## २७.आलस्यम्

१. काकिण्यर्जनरहितः पात्रेसमितः।

२. क्लेशो नास्ति, कुशलं नास्ति।

३. चलतां सौभाग्यं, स्वपतां दौर्भाग्यम्।

४. नगरे कलकले प्रवृत्ते नकुलो निद्राति।

५. पिपीलिकायै आदिष्टे कार्ये पिपीलिका पुत्तिकायै आदिष्टवती।

६. यद्द्रव्यं तद् भवतु, उदरपूरं भोजनं भवतु।

७. वेश्मनि धगधगायमाने वीणां वादयति।

८. वैयाकरणखसूचिरपि हैयङ्गवीनभक्षणे न केनापि पराजीयते।

९. सान्द्रया तन्द्रया माणिक्येऽपि मण्डूरं जातम्।[३९०]

## २८.अव्यवस्थितचित्ताः

१. अबद्धा बुद्धिरशुद्धा सिद्धिः।

२. अव्यवस्थितचित्तानाम् अविवेको महान्।

३. असंबद्धस्य गृध्रस्य यद्वा तद्वा बुद्धिः।

२७.१.काकिणी-पैसा।पात्रेसमितः-केवलं भोजनकाले समुपतिष्ठन् कार्यं किञ्चिदप्यकुर्वन्।२७.३.'चरन् वै मधु विन्दति' इत्यस्य ब्राह्मणग्रन्थस्य नवीनं रूपमिदम्।२७.९.तन्द्रया-जागर्तिस्वप्नयोर्मध्यावस्थया।मण्डूरं-लोहमलम्।यद्यपि माणिक्ये नैतत् संभवं तथाऽपि मलत्वरूपधर्मवद् वस्त्विदमिति हेतोः साम्यलेशः।





४. अस्तव्यस्तं सकलं ध्वस्तम्।

५. चण्डी च चामुण्डी च।

६. पङ्के मुमूर्षोः पाण्डित्यप्रलापाः।

७. रणरणकेन द्राङ्क्षति, शुण्डां च शुनो लाङ्गूलं करोति।

८. व्यग्रमना उग्रभैरवः।

९. शक्तिरपि नास्ति, शान्तिरपि नास्ति। [३९९]

## २९. प्रेम्णो महिमा

१. दयितस्य सुधाकरास्या परेषां सूकरास्या।

२. पिशाची तव कृते घृताची ।

३. लोकानां खरः ; कस्याश्चित् स्मरः । [४०२]

## ३०.विवाहः

१. उद्वाहानन्तरं सद्वाक्यानाम् उद्वासः।

२. उद्वाहे वाञ्छा यद्वाऽके वाञ्छा ?

३. उलूलुशब्दैरुरभ्रसंपातः।

४. ऊढो वा गाढ-मूढो वा ?

५. परिणये पुरुसंपत् पुरोहितानाम्।

२८.७.रणरणकेन-उत्कण्ठया।२९.१.दयितस्य-प्राणप्रियस्य।२९.२.घृताची-अप्सरोविशेषः।३०.१.उद्वाहानन्तरम्-विवाहानन्तरम्।उद्वासः-उद्भ्रंशनम्। ३०.२. यद्वा-अथवा।अके-असुखे, दुःखे।३०.३.उलूलुशब्दैः-विवाहे महाजनक्रियमाणैर्मङ्गलत्वेन गृहीतैः शब्दविशेषैः।शब्दोऽयमधुनाऽपि विवाहाख्ये गर्दभमेले वङ्गादिदेशेषु महिलाभिः क्रियत इति श्रूयते।उरभ्रसंपातः-उरभ्राणां मेषाणां परस्परेण घट्टनम्।३०.५. पुरु-प्रचुरम्।

६. परिणयो वा परितापो वा ?

७. पुरुषद्वेषिण्याः परिणयाधिक्यम्।

८. लज्जालुर्वधूर्हारं लुलायस्य कण्ठे समार्पयत् !

९. वनिताद्वेषिणो वारं वारं विवाहः।

१०. वधू रासभी,वरः क्रमेलकः।

११. विवाहो वा विलापो वा ? [४१३]

## ३१.दाम्पत्यम्

१. गरिष्ठं नियुद्धं स्वादिष्ठं प्रेष्ठयोः।

२. जाते संताने जयघोषः स्फीते संताने भयरोषः।

३. दम्पत्योः कलहश्चोरस्य सौभाग्याय।

४. दम्पत्योः कृते दण्डादण्डि दिव्यं सुखम्।

५. दयितो विवाहानन्तरं दौर्भाग्यदो जातः।

६. पतिपत्न्योः कलहे शिशुचेष्टितं निर्बाधम्।

७. पतिपत्न्योः परस्परेण प्रतारणा।

८. पत्नी करेणुः पतिः परमाणुः।

९. पत्नी ताटका, पतिः किम्मीरः ।

१०. परिणयात् प्राक् प्रेष्ठः, परिणयानन्तरं पापिष्ठः।

११. प्रथमा संततिर्लालनाय, द्वितीया पालनाय, तृतीया ताडनाय।

३०.८.लुलायस्य-महिषस्य।३०.१०.क्रमेलकः-उष्ट्रः।३१.१.नियद्धं-मल्ल-युद्धम्।३१.२.स्फीते-अधिके जाते।स्फायी वृद्धौ।३१.७.प्रतारणा-वञ्चना।३१.८.करेणुः-गजस्त्री।





१२. प्रीतिर्वा प्राणसंकटं वा ?

१३. प्रेयसी परिणयानन्तरं वायसी।

१४. भार्या यदि भारः, पतिः प्रेतः।

१५. शिशुशून्ये गेहे शीर्णदन्तानां बाललीलाः।

१६. स्वयं विग्रः स्वपत्नीं शूर्पणखामभिदधाति। [४२९]

## ३२.कुटुम्बम्

१. अङ्गणं पादशूलम्, अतिथिः शिरःशूलम्।

२. अपायकाले नपादपि न पाति।

३. अजीगर्तः शुनःशेपस्य कोऽस्ति ?

४. कुटुम्बं नाम कन्दुकानां सहस्रैरम्बरकरण्डकः।

५. कुटुम्बे कुरुक्षेत्रम्।

६. कुटुम्बे बन्धनं जीवनं दन्धनम्।

७. श्वश्रूरट्टालिकां कुट्टयति,स्नुषा पेटिकां घट्टयति।[४३६]

३१.१६.विग्रः-गतनासिकः।३२.२.नपात्-पुत्र इत्यर्थो वेदवाङ्मये।३२.३.अजीगर्तः शुनःशेपस्य पिता।स धनाशया स्वसुतं हरिश्चन्द्राय समर्पितवान्।स च हरिश्चन्द्र उदरबाधया पीडितो वरुणाय बलिमर्पयितुमाचकाङ्क्ष।अधिकया धनाशया स्वपुत्रमेव हन्तुमप्युद्यत आसीदजीगर्तः।(ऐतरेयब्राह्मणे )।३२.४.अम्बरकरण्डकः- द्वित्राणां कन्दुकानां हस्ताभ्याम् ऊर्ध्वमुत्क्षेपस्तेषां व्युत्क्रमेण च ग्रहणं पुनरुपर्युत्क्षेपणम्। ''भाणवाङ्मयचरितम्-वेशसंस्कृतिः''-के.वि.कृष्णमाचार्युलु-संस्कृतविमर्शः-संपुटः५.भागौ१,२.डिसेम्बर् १९७७राष्ट्रिय-संस्कृत-संस्थानम्।नव-दिल्ली।३२.६.दन्धनम्-व्यर्थम्। 'अबिन्धनधनञ्जय-प्रशमदं धनं दन्धनम्' (जाठराग्निप्रशमनैकप्रयोजनं धनं व्यर्थम्)इति वेदान्तदेशिकीये वैराग्यपञ्चके।

## ३३.बन्धुः

१. अकारणवैरिणः स्वका एव बन्धवः ।
२. अगोचरा मूलिका संजीविनी, स्वदृक्चरा रुक् संहारिणी।
३. कृपासिन्धुरेव बन्धुः।
४. परकीया उत्तारकाः, स्वकीया उत्प्लावकाः ।
५. बन्धुतर्पणात् सिन्धुना संग्रामो वरम्।
६. बन्धुनिर्गमने बाणोद्धारः।
७. बन्धुर्नास्ति, बाधाऽपि नास्ति।
८. बन्धून् प्रीणयितुं भूरि योगासनम्। [४४४]

## ३४.मैत्री

१. संकटगेहे स्नेहे सावधाना भवत ।
२. सूकरैः सख्याद् सारसैः सङ्ख्यं वरम्। [४४६]

## ३५.असंबद्धता

१. इतः शुण्डापि नास्ति ततः पुच्छमपि नास्ति।
२. के यदि पादरक्षा किरीटं किं करोतु ?
३. यद्वा तद्वा सिद्धिविनायकस्य सपर्या। [४४९]

३३.२.रुक्-रोगः। 'अहितो देहजो व्याधिर्हितमारण्यमौषधम्'।३४.२. सङ्ख्यम्-युद्धम्।३५.२.के-शिरसि। 'कं शिरोऽम्बुनि'इति कोषः प्रसिद्ध एव।३५.३.सपर्या-पूजा।





## ३६.असंबन्धः

१. अजस्य किं गजस्योन्नत्या ?
२. अजस्य रोदनेन गजस्य किम् ?
३. एतावन्तं कालं कुत्रानैषीरित्युक्ते "श्रीतालमाले पाताले वेतालेन भूतालं तोलयामि स्मे "ति वदति।
४. करिघटेत्युक्ते नरि जटेति वदति।
५. कर्णाकर्णिकया मल्लं पतितं श्रुत्वा भल्लेशपुर्याम् उल्लोलकल्लोलाः।
६. काको रटतीति कृत्वा घूकं बलवत् प्राहरन्।
७. कानने कोलाहले कृते कर्तर्या नासिकाछेदः।
८. कुलित्थाजीवस्य कीनाशमांसेन किम् ?
९. खाण्डववने खण्डिकाबीजं दग्धमिति गाण्डीवधन्वनः पुरस्ताद् गोपालो रोदिति।
१०. खुरलीनिरतस्य मुरलीनादेन किम् ?
११. तपश्चिकीर्षुः कपिं पालयति।
१२. तरक्षोः पातेन हर्यक्षस्यास्थिभङ्गः ?
१३. ताटकापुरे देवे वृष्टे, तोटकापुरे तदिगिणतोम् !
१४. दद्रुरोगे कद्रूस्मरणम्।
१५. देवदत्तं तर्पयितुं रेवणार्यं लगुडेन ताडयति।
१६. फेरोरग्रे फलानि पक्वानि।

३६.१०. खुरली-युद्धाभ्यासः।३६.१२.तरक्षोः-hyena's.हर्यक्षस्य-सिंहस्य।३६.१३.देवे वृष्टे-वृष्टौ समारब्धायाम्।३६.१६.फेरोः-शृगालस्य।

१७. भूलोकस्यान्तरङ्गे वल्मीकस्यान्तरङ्गे बिलस्यान्तरङ्गे वराहस्य शैत्यमभूदिति हेतोः पर्वतस्योपरि निर्वाचितः सर्वमठाधिपः 'आक्षि','आक्षि' इति क्षुतवान्।
१८. मीनापणे महावीरविग्रहं मीमांसते !
१९. वार्तायां पृष्टायां वृन्ताकः क्षुत इत्यार्तनादं करोति।
२०. वेतण्डस्य व्रणे जाते वराहस्योपरि चण्डोष्णं तैलमसिञ्चन्।
२१. व्याघ्रस्य वायसेन किम् ? [४७०]

## ३७.कोऽपि गूढः संबन्धः स्यादेव।

१. चरिल्ली चोरीत्युक्ते चञ्चुसूच्या चञ्चूराकुञ्चिता।
२. तार्क्ष्ये भर्त्सिते तापसः किमिति ताण्डवमारभते ?
३. दार्वाघाटं दृष्ट्वा देवदत्तो दन्तान् दर्पणे दृष्टवान्।
४. नकुलो दस्युरित्युक्ते नहिकुटी नहि नहीति नर्दति।
५. महाकङ्कस्य मर्दले भग्ने महाक्रौञ्चस्य कण्ठे किमर्थं कण्डूः?
६. शृङ्गं भुग्नमित्युक्ते पुच्छस्य किमित्याधिः ? [४७६]

३७.१.चरिल्ली-Common House Swift or Swallow। चञ्चुसूची-Weaver bird ।३७.२.तापसः-बकः तपोनिष्ठश्च।३७.३. दार्वाघाटः-Wood-pecker।३७.४. नहिकुटी-Crag Martin or IndianSand Martin।३७.५.महाकङ्कः-Great White-belled Heran।महाक्रौञ्चः-Great White Crane । 'Birds in Sanskrit literature:Sanskrit-English Index' by Elfrun Linke.ABORI LXXVIII parts1-4 1998 Pp.121-141 ३७.६.भुग्नं-वक्रम्।आधिः-मानसी व्यथा।





## ३८.असंभवः

१. पृथुकतण्डुलराज्ये पट्टाभिषिक्तः पौरवपुरं पाति।
२. भ्रंशानन्तरं मुसलः पल्लवितः।
३. मल्लिका यदि नारिकेलवृक्षे फुल्लेत्, मम गृहे कनकवर्षणं भवेत्।
४. यदा देवः सुवर्णं वर्षति, तदा मम पितामहाय पीताम्बरं क्रेष्यामि।
५. शृगालीकाकयोर्विवाहे शोभते मूर्खस्य मस्तिष्के पल्लवः।
६. समुद्रे तृषिते सलिलं कुत आनेयम् ? [४८२]

## ३९.उत्कोचः

१. उत्कोचतिमिङ्गिले लब्धे किं वेतनशफर्या बकासुरस्य ?
२. काकिणीदाने काको भव्यः,कार्षापणदाने घूको दिव्यः।
३. मम पितुः शृङ्गपुच्छानि न सन्ति।मम तु शृङ्गपञ्चकं, पुच्छषट्कं च, तत् कथम् ?
४. लक्षमुत्कुच्य शतं प्रकुरुते। [४८६]

३८.१.पृथुकतण्डुलः-कृष्णाय कुचेलेन यो दत्तः, सः।३९.१.शफर्या-मीनविशेषेण।३९.२.काकिणी-धनस्याल्पतमो भागः।'पैसे' इति कन्नडे। कार्षापणं-सुवर्णनाणकम्।३९.३.शृङ्गपुच्छानि-लक्षणया धनम्।दरिद्रे वंशे जातोऽपि उत्कोचगिलनेन धनवानस्मि। ३९.४.लक्षमुत्कुच्य-लक्षरूप्यकाणि उत्कोचत्वेन स्वीकृत्य।शतं प्रकुरुते-शतं रूप्यकाणि ददाति। प्राचीनतमोऽयं प्रयोगः।भक्षितस्योत्कोचस्य सदृश्या मात्रया कार्यम् अकृतवति पुरुषे (पुरुषविषये)उत्कोचं दत्तवतां दूयमानानां चेयमुक्तिः।

## ४०.कार्यकालः

१. अपभ्रंशमप्यजानानाः सपर्यया पाणिनीयैः सम्मान्यन्ते।

२. कण्ठीरवेणापि रोगिणा शुण्ठी सेव्यताम्।

३. कार्यकाले कर्दम एव यक्षकर्दमः।

४. कार्यार्थिभिः करीषमपि कबलीकरणीयम्।

५. द्वारपालो वा धरणीपालो वा ?

६. पुत्तिकापुरे जिजीविषुणा मृत्तिकाभक्षणं शिक्षणीयम्।

७. मर्कटेन नृत्ते मणीचकगुच्छानि तस्मै मयूरः समर्पयति।

८. सलिलाकाङ्क्षिणा सरोवरे मङ्क्तव्यम्।

९. सुधालाभाय सैरिभलाङ्गूले सुगन्धं लेपय। [४९५]

## ४१.कार्यहीनाः

१. अटाट्यते वटान् परितो जटाधारी।

२. अट्टालिकायां विट्ठलभट्टाचार्यस्तण्डुलं कुट्टयति।

३. असति वरकार्ये घघति परनिन्दा।

४०.२.कण्ठीरवेण-सिंहेन।४०.३.यक्षकर्दमः-अतिसुगन्धिद्रव्य-साधितानुलेपनभेदः। 'कर्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः।स्याद् यक्षकर्दमो मिश्रैः' इति अभिधानचिन्तामणौ(३.६३८)।कर्पूरस्थाने कुङ्कुमो धन्वन्तरि-निघण्टौ पठित इति तत्रत्येन देवसागरगणिकृत-व्युत्पत्तिरत्नाकरव्याख्योद्धृतेन पद्येन ज्ञायते। ४०.७.मणीचकं-पुष्पम्।४०.८.सैरिभः-महिषः।४१.१.अटाट्यते-भृशमटति। अट्+यङ्लुक् ।४१.३.घघति-उच्चैर्हसति।घघ हसने।अत्र परनिन्दा कर्त्री।





४. अस्ति ममाप्रकृतं बहु कार्यम्।

५. उभयोः कार्यं नास्ति, सभयं सर्वं तत्त्वम्।

६. करपादा विश्रान्ता जिह्वा किं न श्रान्ता ?

७. कार्यशून्याः कार्पासपुरे कोलाहलं कुर्वन्ति।

८. केशान् पत्युर्लुञ्चति कार्यहीना भार्या।

९. क्रुद्धो भोजराजो दग्धं बीजं खादति।

१०. जोषमनुपविश्य जर्णात् पतित्वा जीवसंकटं प्राप्नोत्।

११. तण्डुलध्वंसी मण्डनमिश्रो मुण्डनं कुरुते।

१२. भस्मविषये भयानकं ताण्डवम्।

१३. मल्लाधीशो रल्लकमाच्छाद्य स्वप्ने भल्लेशेन युद्ध्यति।

१४. मृत्पिण्डं महापर्वतं चिकीर्षति।

१५. वीतकार्या देवताऽपि प्रेततायै स्पृहयते। [५१०]

## ४२.कृपणः

१. आघोणलाङ्गूलं कृपणाग्रेसरचक्रवर्ती।

२. कर्णयोर्नाणकध्वनौ पतिते कृपणानां गोण्डलीनृत्यम्।

३. कूटनाणकैः कोटिदानम्।

४. मुखे कारुण्यं करे कार्पण्यम्। [५१४]

४१.१०.जोषम्-गात्रसंयमपूर्वकम्।जर्णात्-जीर्णद्रुमात्।४१.१३.रल्लकम्-राङ्कवजातीयकम् अतिस्थूलमाच्छादनवस्त्रम्।भल्लेशेन-भल्लूकेन। ४१.१४.चिकीर्षति-कर्तुमिच्छति।अपरिगणनीयां क्षुद्रां घटनां महाघटनामिव वर्णयतीत्यर्थः।४१.१५.वीतकार्या-सप्रयोजनकार्यरहिता। ४२.२.गोण्डलीनृत्यम्-नृत्यविशेषः।संगीतरत्नाकरेऽस्य प्रपञ्चः।

## ४३.क्रोधः

१. क्रुद्धता विद्धबुद्धीनाम्।

२. क्रोधो योधं ममार। [५१६]

## ४४.वरम्

१. अकरणादसंबद्धकरणं वरम्।

२. अलाभादल्पो वरीयान्।

३. जोषमुपवेशनादीषत् कासनं वरम्।

४. ज्वरेण शयनादुन्मादेन द्राङ्क्षणं वरम्। [५२०]

## ४५.चतुरतराः

१. आखैः किं प्रयोजनमाखोः ?

२. उर्वीपालनं दर्वीधारणेन कुर्वन्ति।

३. कुक्कुटो यावन्न लङ्घयति तावच्छिखा लङ्घिता।

४. गर्दभे ताडिते गोमायुर्जागरितः।

५. चतुराणां मुष्टौ चत्वारि सेनाङ्गानि।

६. जोषमुपविश्य जगतीं जुषति।

७. तैर्बिलान्तः सृप्तम् एतैः स्थलान्तः सृप्तम्।

४४.३.ईषत्-स्वल्पशः। क्रियाविशेषणमेतत्। कासनं-कासक्रिया। ४४.४. द्राङ्क्षणं-आक्रोशः। ४५.१.आखैः-खननसाधनविशेषैः। ४५.४.गोमायुः-शृगालः। ४५.६.जोषं-गात्रकम्पराहित्यं यथा स्यात् तथा। जुषति-सेवते। ४५.७.सृप्तम्-गात्रसंकोचपूर्वकं प्रविष्टम्।





८. दार्षदां देहि, देवामृतं लाहि।

९. नाणके पटिष्ठाः, क्रय्ये वरिष्ठाः।

१०. पङ्कं पङ्कजमभिधाय राङ्कवेण रराजते।

११. बुद्धौ निशितायां बिल्वं ब्रह्मास्त्रम्।

१२. वारिवाहे वीनां वलनमिव विज्ञानां वाक्।

१३. सूची तीक्ष्णधियां सर्पास्त्रायते।

१४. सूदाश्च धृतवेदाश्च। [५३४]

## ४६.चरितम्

१. उपोषितस्य भोज्यं न, तृतीयकृष्णस्य राज्यं न।

२. कटकेशो वा लटकेशो वा ?

४५.८.दार्षदा-दृषदि पिष्टा। सक्तवः। धान्यचूर्णमिति यावत्। लाहि-स्वीकुरु। ला आदाने अदादिः। ४५.९.क्रय्ये-क्रेतुं शक्ये वस्तुनि। ४५.१०.राङ्कवेण-रङ्कुनामकमृगविशेषरोमभिर्निर्मितेन पटविशेषेण। ४५.१२.वारिवाहे-मेघे। वीनां-पक्षिणाम्। वलनमिव-चलनमिव। पक्षिणो यथा मेघमध्ये विना श्रमलेशं डयन्ते, तद्वत् सलीलं वदन्ति चतुरा येन विरोधलेशोऽपि नोत्पद्यत इत्यर्थः। ४५.१४.सूदाः-पाचकाः। ४६.१.उपोषितस्य-उपवासं कृतवतः। तृतीयकृष्णस्य-मुम्मडिकृष्णराज ओडेयर्-कस्य। (राज्यभारसमयः-१७७४-१७९६.)। एष टिप्पूसुल्तान्-कस्य मरणानन्तरं मैसूरुराज्यस्य राजाऽऽसीत्। समर्थोऽपि क्रमेण क्लेशैर्ग्रस्त एषः। राज्यनिर्वहणासमर्थोऽयमिति व्याजं ख्यापयित्वा ब्रिटिष्कै राज्यमेतस्माद् बलादपहृतम्। एष श्रीतत्त्वनिध्यादिबहुग्रन्थकर्ता विद्वान् आसीत्। ४६.२.कटकः-सैन्यभागः। लटकाः-दुष्टाः। अयमाभाणकः कमप्येकं पुरुषं न निर्दिशति। कदाचित् सेनानायका दुष्टा अभूवन्नित्यत्र सर्वत्रापि विश्वचरिते साक्ष्याणि लभ्यन्ते।

३. तिरुमलनायको वा गुरुखलनायको वा ?
४. दन्तिदुर्गस्याप्यन्तिमा दशा।
५. दलपतिः खलपतिर्जातः।
६. पुलिकेशिनं प्रजिहीर्षन् अवकेशी संवृत्तः।
७. पुलिकेशिनं विरुध्य युद्ध्यन् हर्षवर्धनो हाहाचकार।
८. प्राकारं विलङ्घ्य शोकाकुलः संवृत्तः।
९. मयूरे दृष्टे महासिंहानामूरुकम्पः।

---

४६.३.तिरुमलनायकः -एष राजा मधुरैनगरं क्रैस्तवीये सप्तदशशतके शशास।तस्य सभाकविरेव प्रसिद्धो नीलकण्ठदीक्षितः।नीलकण्ठ-दीक्षितेन दर्शितमार्गोऽप्येष क्रमेणाविनीत उद्धटश्चाभूत्।(शताव-धानिना तत्रभवता डा.रा.गणेशेन कन्नडभाषायाम् अनूदितस्य शतक-त्रयस्य पीठिका) ४६.४.दन्तिदुर्गः-राष्ट्रकूटाख्यराजवंशस्थापकस्यास्य राज्ञो राज्यशासनावधिः प्रायः क्रै.७३५-७५६।चलुक्याधिपतिं पराजित्य महाराष्ट्रस्य कांश्चन भागान् तथा गुर्जरस्यापि कांश्चन भागानाक्रान्त-वान्।परन्तु अकालमृत्युना मृतः।४६.५.दलम्-सैन्यभागः। ४६.६. प्रजिहीर्षन्-प्रहर्तुमिच्छन्।अवकेशी-मुण्डितमुण्डः।उत्तरापथेश्वरो हर्षवर्धनो दक्षिणापथेश्वरं पुलिकेशिनं जेतुं प्रायतत, विफलश्च बभूव। तस्मादेव कारणाद् हर्षचरिते बाणभट्टस्तद्वृत्तान्तं परिहरन् तत्समाप्तिं नैवाकरोत्।कादम्बर्यां तु जरद्द्रविडधार्मिकवर्णनव्याजेन पुलिकेशिनं सोल्लुण्ठनं कटाक्षितवान् यत्र जरद्-द्रविडधार्मिको दक्षिणापथेश्वरो बुभूषुर्दुर्गां प्रार्थयते! ४६.८.प्राकारं-दुर्गम्।कदाचिद् दुर्गलङ्घनं पराजय-हेतुर्भवति।४६.९.मयूरे-कदम्बवंशस्थापके मयूरवर्मणि।मूलतो ब्राह्मणः सन् मयूरशर्मा काञ्च्यां विद्याभ्यासकाले क्षत्रियेण केनाप्यपमानितः सन् क्रुद्धः क्षात्रं धर्ममवलम्ब्य राजा बभूव।मयूरशर्मकुटुम्बवर्गीयाणां गृहस्य समीप एव कोऽपि कदम्बवृक्ष आसीत्।.........................





१०. शर्म वाऽस्तु वर्म वाऽस्तु धर्मं तु पालयतु।
११. श्रीपुरुष एव भूपुरुषः। [५४५]

## ४७.रामायणम्

१. अच्छे स्वान्ते पुच्छेनापि सिद्धिः।
२. अधिकं पापं प्रचुरविलापम्।
३. अध्वानं वीक्ष्य निर्दोषमात्मा गर्ते निपात्यते।
४. आर्ये भक्तिः कार्ये रक्तिः।
५. कुम्भकर्णे जागरितेऽपि दम्भवान् दशकण्ठो न जागरितः।
६. क्षयं प्राप्तुं स्वयं पतन्तं श्रयन्ति ।
७. डिण्डिमो नर्दति, प्रासस्तु प्रहरति ।
८. दृष्ट्वा दग्ध्वा निवृत्तः।

---

....तस्मादेते कदम्बवंश्या इत्यात्मानं ख्यापयन्ति स्मेति केनचित् शासनेन ज्ञायते।कर्णाटके राजभाषात्वसिंहासने संस्कृतभाषायाः पट्टाभिषेक इदंप्रथमतया प्रायश एतेषामेव समयेऽभूत्।४६.१०.शर्म वाऽस्तु वर्म वाऽस्तु-मयूरशर्मकालान्तरं रचितेषु केषुचन शासनेषु मयूरशर्मणः प्रस्तावो मयूरवर्मेत्यस्ति(तस्य क्षत्रोचितधर्मग्रहणात्)।४६.११.श्रीपुरुषः-गङ्ग-वंशस्य राजा।द्वितीयविक्रमादित्ये काञ्चीमाक्रममाणे तस्य साहाय्यमेष कृतवान्।अस्यायं विशेषः-पट्टाभिषेकात् प्रागेव कांश्चन प्रान्तानेष शशास (प्रायः प्रान्ताधिकारी सन्)।स्थाननाम न मुख्यं परन्तु कार्यं मुख्यमित्यर्थे रचितोऽयमाभाणकः।४७.४.रक्तिः-प्रीतिः।४७.७.प्रासः-आयुध-विशेषः।४७.८.सुन्दरकाण्डस्य सारसंग्रहोऽयम्।हनूमत एव सुन्दरकाण्डे प्राधान्यादेवं पदत्रयेण हनुमद्विषयकेण तत्सारोऽत्र दर्शितः।

९. नाकुजीये काव्ये नाभस्वत एव नायकः।
१०. पुरे श्रान्तिर्वने शान्तिः।
११. फेरुणा युद्ध्यतः पुण्डरीकस्यापि चण्डव्रणाः।
१२. भग्नं चापं लग्नं श्रेयः।
१३. मस्तकेषु दशसु मस्तिष्काणि भिन्नानि।
१४. मृदा जाता मृदं याता।
१५. रामोऽपि वामोऽभवत्।
१६. वरौ वा ज्वरौ वा ?
१७. वालुकाराशिर्व्यन्तरं न भनक्ति।
१८. संन्यासी नाट्यकरः पिशाचाद् घोरतरः।
१९. साहसे साध्वसं न।
२०. सुप्ता सर्पिणी कशया जागरिता। [५६५]

## ४८. वाल्मीकीयभिन्नं रामायणम्

१. अबद्धेषु कथानकेष्वशुद्धं प्रवचनं विरुद्धविज्ञानानाम्।
२. अभिनवायां रामकथायां पवनपुत्रस्य पुच्छपञ्चकम्।
३. अभिनवो वाल्मीकिरतिकायेन यतिधर्मं ग्राहयामास।

४७.९.नाकुजीये-वाल्मीकीये।(नाकुर्वल्मीकस्तज्जो वाल्मीकिस्तदीये) नाभस्वतः-नभस्वतो वायोरपत्यं हनूमान्।४७.११.फेरुणा-शृगालेन। पुण्डरीकस्य-व्याघ्रस्य।४७.१७.व्यन्तरं-पिशाचविशेषम्। ४७.१९. साध्वसम्-भीतिः।





४. कवीबुभूषुणा शवीभूतं नवीनं रामायणं सृष्टम्।
५. नवकविरचिते रामोदन्ते मन्दादृत्ये नव्यदुरन्ते । मण्डोदर्या दयितो रामः सुग्रीवः शूर्पणखाकामः।
६. नाकुजीयं नाशयित्वा नव्यं नरकं निःसारय।
७. प्रत्यग्रे प्राचेतसीये प्रहस्तस्य पत्नी परशुरामं पाडयति।
८. रेफेण रचिते रामीयचरिते प्राभञ्जनेः पत्न्यः पञ्चसहस्रम्।
९. वामलूरीयं विध्वस्य वामं वृत्तान्तं वमति।
१०. सप्रयोजनं कर्म नास्ति चेद्, विप्रतीपं रामायणं कुरु। [५७५]

## ४९.महाभारतम्

१. अक्षधूर्ताद् रक्षसां गणो वरः।

४८.४.कवीबुभूषुणा-कविर्भवितुमिच्छुना।४८.५.राम+उदन्ते-वार्तायाम्। अत्र प्रासङ्गिकं किञ्चित्।दन्तकथेति प्रयुञ्जानो लोकोऽपभ्रंशते। उदन्तकथेति तु संस्कृतत्वधर्मवान् प्रयोगः। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्त' इति वदन् अमरोऽत्र शरणीकरणीयः। मन्दादृत्ये-केवलं मन्दैरेवादरणीये।क्यप्। ४८.६.नाकुजीयं-वाल्मीकिरामायणम्।चत्वारिंशेपुटे टिप्पणी दृश्यताम्।४८.७.प्रत्यग्रे-अभिनवे। प्राचेतसीये-प्राचेतसो वाल्मीकिस्तदीये।४८.८.रेफेण-नीचेन।प्राभञ्जनेः-प्रभञ्जनो वायुस्तत्सुतस्य हनूमतः।४८.९.वामलूरीयं-वामलूरो वल्मीकस्तज्जो वामलूरो वाल्मीकिस्तदीयम्।वामम्-विरुद्धम्।४८.१०.विप्रतीपं-विरुद्धम्। ४९.१.अक्षधूर्तात्-द्यूतक्रीडायां चतुरात्।

२. आयोधने क आत्मीयः ?
३. उत्तरकुमारस्य महत्तरं माहात्म्यं बन्दिनां पुरस्तात्।
४. कदाचित् कदनमेव शान्तिसदनम्।
५. केनापि कारणेन पाण्डवाः कानने क्लिश्नन्ति।
६. गजानां सभायां गन्धमूषिकश्चीत्करोति।
७. दायादानां दया नास्ति।
८. दान्तो वा भ्रान्तो वा ?
९. दिवारात्रं भारतं श्रुत्वा " द्रौपदीदामोदरयोः कः संबन्ध?" इति पृच्छति।
१०. द्रोणेन दीर्णोत्साहो दुर्योधनेन दर्पितः।
११. धर्मदोषज्ञैः शीलवतां शर्म शीर्णम्।
१२. धर्मराजस्य कर्मपापेन केशपाशस्य क्लेशपाशः।
१३. धर्मे पण्डिताः कर्मेषुणा खण्डिताः।
१४. नर्दन्तो मर्दयन्ति नीचस्य मस्तके तैलम्।
१५. प्रतिपक्षे पतिते प्रत्यग्रं संकटम्।
१६. प्रधने सर्वेऽपि परकीयाः।
१७. भारतयुद्धस्य भीष्म एव निदानम्।
१८. भारते भव्यात्मा भीमः ।
१९. भीरोरुत्तरकुमारस्य 'भूमिञ्जय' इति संज्ञा।
२०. महतां योद्धॄणां मृदा मिलनम्।

४९.२.आयोधने-युद्धे।४९.३. बन्दिनाम्-स्तुतिपाठकानाम्।४९.११. दोषज्ञैः-पण्डितैः।४९.१३.कर्मेषुणा-कर्मनाम्ना बाणेन।४९.१६.प्रधने-युद्धे।





२१. महोग्राः कदाचिन्मृणालाः।
२२. मूकत्वं बहूनामेकस्य शिरसि शृङ्गाय।
२३. लुलायेभ्यो लगुडोपायः।
२४. वर्मधारिणां धर्मभ्रंशेन घर्मः।
२५. शिष्टे दुष्टे शिञ्जिन्या भाषणम्।
२६. श्मशानभूमौ शान्तिपाठाः।
२७. सर्वा संपद् गर्वान्निष्टा।
२८. सहसानीकं ध्वस्तमनेकम्।
२९. संकीर्णे संकटे छेदनं साधनम्।
३०. सव्यसाचिनो नव्यः पराभवः।
३१. सारवती 'मारये'ति देशना कदाचन। [६०६]

## ५०.वैद्यकीयम्

१. अङ्गानां भङ्गे भृङ्गामलकं किम् ?
२. अनमीवासः परदेवासः।
३. आहारो नियन्त्र्यताम् आरोग्यं निमन्त्र्यताम्।
४. उदरं यदि शुचि न दरं रोगात्।
५. क्षवथुरोगवते श्वयथुभैषज्यम्।
६. घुटिकासेवनेन झटिति स्फुटितो रोगः।

४९.२४.घर्मः-उष्णता।४९.२५.शिञ्जिन्या-धनुषो रज्वा।
४९.२८.अनीकम्-सैन्यम्।४९.३१.देशना-उपदेशः।४९.३०.सव्यसाचिनः-अर्जुनस्य।५०.२.अनमीवासः-रोगरहिताः।वैदिकोऽयं शब्दः।देवासः-देवा इति शब्दस्य वैदिकं रूपमिदम्।५०.४. दरम्-भयम्।

७. चरकं ज्ञात्वा हरति प्राणान्।
८. जगतीं जेतुं जिह्वां जय।
९. तर्पय जिह्वां सर्प च रोगम्।
१०. भेषजे पीते रोगो जातः।
११. महौषधिरभूत् पङ्गुर्महावैद्यस्य कौशलात्।
१२. रासभे दृष्टे दन्तशूलम्।
१३. रुग्णस्याग्रे भेषजं विस्मृतम्।
१४. रोगः शापश्चेतनानाम् अलसानां वरो वरः।
१५. रोगी वैद्यस्य भेषजम्।
१६. विग्रस्य किं प्रतिश्यायः ?
१७. वैद्ये दृष्टे व्याधिर्जातः।
१८. वैद्येन ग्रन्थे पठ्यमाने रुग्णस्य प्राणाः आकाशमपठन्।
१९. शीर्षवेदने गते ,श्लीपदं संजातम्।
२०. शुक्रशिष्या रोगिबन्धून् रोदयन्ति ।
२१. शुण्ठी शोषात् क्षयं गता।
२२. सर्वाणि भेषजानि पीत्वा सर्वान् लोकान् जगाम।
२३. सर्वान् वैद्यान् बुभूषून् दृष्ट्वा धन्वन्तरिरुच्चैररुदत्।
२४. सर्वासां रुजां स्वान्तचिन्ता निदानम्। [६३०]

५०.१६.विग्रस्य-विगतनासिकस्य।प्रतिश्यायः-नासिकारोगभेदः।५०.१९. श्लीपदम्-पादस्यातिशयेन स्थौल्यम्।रोगभेदोऽयम्।४७.२०.शुक्राचार्यः संजीविनीविद्यां वेत्ति स्म।५०.२१.शुण्ठी तु महौषधिः।तस्या एव यदि रोगो भवति,दूरोत्सरिता चिकित्साप्रत्याशेत्यर्थः।





## ५१.दीनाः

१. अत्रावटस्तत्रानलः।
२. अनुदिनं कुम्भीपाकेऽप्यायुः शतानां शतम्।
३. अस्थि दशतो शुनो गृहम् अमृतेच्छुर्गरुड आगतः।
४. इष्टदेवतास्मरणं कष्टकाले।
५. कपर्दिकाविहीनस्य करयोः प्रतिसप्ताहं नूतना सन्ततिः।
६. काकिणीरहितानां स्वप्ने कुबेरकोशः।
७. काकिणीहीनस्य श्मश्रुणि चम्पकप्रसाधनाय किङ्करपञ्चकम्।
८. कुड्यं कुट्टयति, घटो घट्टयति।
९. गर्दभवाहस्य पञ्चकन्याभिर्विवाहः।
१०. ग्रासं ग्रसमानानां हव्यान्ने हेवाकः ?
११. घर्मो घोरश्चर्मोत्प्लोषः।
१२. चर्वति कपर्दिकां चक्रवर्ती भिक्षते !
१३. तलं ताडयति, कुड्यं पाडयति।
१४. दरिद्राणां दुन्दुभिवादनम्।
१५. दीर्णहृदयानां शिरसि दृषद्वर्षा।
१६. दुरितं दैवाल्लब्धम्।
१७. दुर्गतिकाले देवं स्मरति।

५१.१.अवटः-गर्तः। ५१.१०.ग्रासं-तृणम्।हेवाकः-उत्कण्ठा।५१.११. घर्मः-उष्णता।उत्प्लोषः-दहनम्।उत्+प्लुष दाहे भ्वादिः।५१.१५.दृषद्वर्षा-अश्मवृष्टिः।

१८. दुर्गतो मृगेन्द्रो गर्दभस्य पादसंवाहकः।
१९. देव एव दीव्यति चेद् भक्तस्य भिक्षापात्रं शरणम्।
२०. देवाय भागे दत्ते देवलस्य करे कपर्दिका।
२१. धैर्ये गलिते दण्डैः प्रहारः।
२२. पतितं चाटकैरं प्रासैः प्रहरन्ति।
२३. पिपीलिकारोदनं पर्वतः शृणोति किम् ?
२४. पुष्पन्धयस्य प्रच्छादने प्राप्ते चटकस्य चीवरं चोरितम्।
२५. बुभुक्षाधिक्ये भिक्षापात्रं भग्नम्।
२६. भग्नास्थिकस्य शिरसि लगुडेन प्रहारः।
२७. भस्मनि शयालोर्भर्मणि स्वप्नः।
२८. भूरिदुःखस्योपरि नारिकेलपातः।
२९. मृदुलेषु मानवास्त्रम्।
३०. लताप्रहारेण भग्नकटौ लगुडप्रहारः।
३१. विशेषः को मुमूर्षोर्विषवापीपाशानाम् ?
३२. वृष्टौ वाञ्छायां वर्षोपलाः पतिताः।
३३. व्रतं भ्रष्टं सुखं नष्टम्।
३४. सप्तसु संकष्टेषु सप्ततिः संसर्पाः।

५१.१९.दीव्यति-द्यूतं क्रीडति।५१.२०.देवलस्य-अर्चकस्य।५१.२२.चाटकैरं-चटकस्य पोतम्।प्रासैः-आयुधविशेषैः।५१.२४.पुष्पन्धयः-PurpleSunbird प्रच्छादने-अनर्घे वस्त्रे।चीवरम्-मुनियोग्यं वस्त्रम्।५१.२७.भर्मणि-सुवर्णविषये। विषयसप्तमी।वर्षोपलाः-हिमाश्मानः।५१.३१.मुमूर्षोः-मर्तुमिच्छोर्जनस्य।५१.३४. संसर्पाः-(तैत्तिरीयब्राह्मणे)अधिकमासाः।सौरमानचान्द्रमानयोर्वर्षगणने उच्चावचत्वं





३५. सार्वभौमस्य विवाहे सारमेयं कः पृच्छति ?
३६. सौभाग्यतल्पे सुषुप्सुः दौर्भाग्यकर्दमे लुठति।
३७. स्खलित्वा रुदतां चक्षुषि सज्जयन्ति मरिचचूर्णम्।
३८. स्वर्धुन्यां सलिलं नास्ति।
३९. स्वादु भक्ष्यं श्वाऽपहरति। [६६९]

## ५२.अभिमानलेशेनापि हीनाः।

१. दयया दारय मेऽधुना शिरः।
२. पीडयाथ पाडयालमीडनं करोमि ते।
३. मालिन्ये क्षिप्ते मणीचकैः सपर्या।
४. वदने निष्ठ्यूते, पदयोर्मणिमञ्जीरम्। [६७३]

## ५३.दृष्टिभेदः

१. अतिथीनां शिशवः आतिथेयानां पशवः।
२. केषाञ्चिच्चटकः केषाञ्चिल्लटकः।
३. भुवने लब्धकीर्तिः, स्वगृहे मूर्खमूर्तिः।
४. वर्षा ग्रामे हर्षाय, नगरे क्लेशप्रकर्षाय। [६७७]

संभवति।तत्सामञ्जस्यसंपादनाय त्रयोदशतमो मासः कल्प्यते यस्याधिक-माससंज्ञा।यद्यप्यधिकमास एक एव।परन्तु यद्यधिकमासाधिक्यं भवति, तदा क्लेशबाधायाः संतपनावधिरधिकतर इति कल्पनयाऽत्र सप्ततिरित्यु-क्तम्।५१.३८.स्वर्धुन्यां-देवगङ्गायां मन्दाकिन्याम्।५२.२.पीडय,अथ, पाडय-पादाभ्यां प्रहर।पाड लत्ताप्रहार इति मया सृष्टो धातुः।ईडनम्-स्तुतिः।५२.३.मणीचकैः-पुष्पैः।५२.४.मञ्जीरम्-नूपुरम्।५३.२.लटकः-दुष्टः।

## ५४.धनमहिमा

१. कनकाय सनकोऽपि स्पृहयते।
२. द्रविणे दृष्टे धर्मराजोऽपि पाटच्चरो बुभूषति।
३. धनवती दूर्वा दरिद्रं देवदारुं नियुद्धे निपातयति।
४. धनमर्जय, मानं वर्जय।
५. भर्मदेवतैव धर्मदेवता।
६. रैशब्देन श्रवा दिव्या रोहन्ति बधिरेष्वपि।
७. वसुमान् विट्चरो वाजिना वीज्यते।
८. वित्तमादाय विलपनं कृत्त-मानानाम् आजीविका।
९. हाटकाशया कीटकं त्रोटयति। [६८६]

## ५५.स्थानमहिमा

१. अंहति सिंहः सिंहासनस्थस्य ग्रामसिंहस्य पुरस्तात्।
२. अटवीकेसरिणं नगरकुक्कुरो नामयते।
३. ग्रामटिके सार्वभौमो महानगरे तृणायापि न।
४. स्वग्रामे वेतण्डः परग्रामे पिष्टपिण्डः। [६९०]

---

५४.२.पाटच्चरः-चोरः।५४.३.नियुद्धे-मल्लयुद्धे।५४.५.भर्म-सुवर्णम्। ५४.६.रैशब्देन-धनमिति शब्देन।श्रवाः-कर्णाः।५४.७.वसुमान्-धनवान्। विट्चरः-ग्राम्यसूकरः।वाजिना-अश्वेन।५४.९.हाटकं-सुवर्णम्।त्रोट-यति-भनक्ति।५४.१.अंहति-उरसा गच्छति।ग्रामसिंहस्य-शुनः। ५५.३. ग्रामटिके-अल्पे ग्रामे।५५.४.वेतण्डः-गजः।





## ५६.कालमहिमा

१. उत्पाटितदन्तम् अजगरं मण्डूको मुसलेन ताडयति।
२. उर्वीश्वरो दर्वीं गृह्णाति।
३. दुर्भिक्षे ग्रसताद् देवोऽपि ग्रासम्।
४. भूतपूर्वसर्वाधिकारी संप्रति भिक्षाचारी।
५. मेरुं दृष्ट्वा मृत्कुम्भं विस्मरति।
६. विरागी वार्धुषिकः संजातः।
७. वीतरागाः स्फीतभोगाः संवृत्ताः।
८. समयः श्वमयः ।
९. सुखे प्राप्ते सख्यं किमर्थम् ?
१०. सुमनांसि द्विषन्ति सरघाः।
११. स्वरोस्त्सरुर्भग्नः। [७०१]

## ५७.अन्नमहिमा

१. उदरार्थमुदारा वाचः।
२. जगद्दृश्यकाव्यस्य जाठराग्निरेव सूत्रधारः।
३. तण्डुलाय ताण्डवं नृत्यम्।

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

५६.१.अजगरम्-महासर्पम्।५६.६. वार्धुषिकः-द्रव्यवृद्धये ऋणं यच्छंस्तेनैव च कर्मणाऽऽजीविकां कुर्वन्।५६.१०.सुमनांसि-पुष्पाणि(कर्तृ)।सरघाः-मधु-मक्षिकाः (कर्म)।५६.११. स्वरोः-स्वरुरिन्द्रस्य वज्रायुधं, तस्य।त्सरुः-मुष्टिना ग्रहणार्हो भागः।५७.२. दृश्यकाव्यस्य-नाटकस्य।
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

४. धीर्नास्ति रासभस्य, ह्रीर्नास्ति जठरस्य ।

५. सुग्रासे लब्धे सर्वेऽपि प्राणसखाः।

६. यूषाक्तमोदनं पीयूषवेदनम्। [७०७]

## ५८.धर्मः

१. अस्थाने दया धर्मं द्यति।

२. कर्मप्रपञ्चे धर्मक्लेशाः।

३. धर्मनिष्ठानां कर्मपीडा।

४. धर्मवतां दुर्मरणम् ।

५. धर्मारण्ये दारुच्छेदः।

६. लटकेषु धर्मशास्त्रं लगुडात्मकम्।

७. स्तुतिकृतिरबला गाली प्रबला। [७१४]

## ५९.पुण्यं पापं च

१. गजान् हन्तुर्गोपूजायां महती प्रीतिः।

२. गौतमबुद्धं ध्यात्वा घोरं खड्गं लाति।

३. चोरितेन पुष्पेण धर्मदेवस्य पूजा।

४. तावद्दघ्नं पापं यावद्दघ्नं पुण्यम्।

५. पटहनिर्माणाय मूकप्राणिनां मारणम्।

५७.६.यूषा-'सारु' इति कन्नडे। अनया मिश्रितस्य ओदनस्यादनं कर्णाटके नितरां प्रसिद्धम्। ओदनशब्दो नपुंस्यपि । वेदनं सुखम्। 'वेदनं सुखदुःखयोर्' इत्यमरः। ५८.१. द्यति-खण्डयति। दो अवखण्डने। ५८.६.लटकेषु-दुष्टेषु। ५९.२.लाति-आदत्ते। ला आदाने। ५९.४.दघ्नम्-परिमाणकम्।





६. पापाचरणेन पुण्यसंचयः।

७. पालीत्रिपिटकेन पिपीलिकां मारयति।

८. पुण्यं स्वप्रणीतं परैरनुष्ठितं कुम्भीपाकाय।

९. पुण्यपादपे पापफलम्।

१०. पुण्येनार्जितं द्रव्यं पापाय व्ययितम्।

११. पुरस्ताद्देवस्य पादरक्षायां चिन्ता।

१२. पुराणं श्रुत्वा पादरक्षाम् अचूचुरत्।

१३. पुस्तकचोरस्य पुण्ये पञ्च प्राणाः।

१४. पूर्णे पापे प्रच्छकः कोऽपि नास्ति।

१५. प्राचीनं पुण्यं नवीनं पापमभूत्।

१६. प्राचीनपुण्यानां प्रत्यग्रपापेन परिहारः।

१७. फलिते पापे दलितं हृदयम्।

१८. शुनः पुण्यवृद्ध्या शशस्य पापवृद्धिः।

१९. शैलदघ्नेषु पातकेष्वैलबिलेन कृतेषु चैलधावस्य पापं कैलासदघ्नम्। [७३३]

## ६०.फलज्यौतिषम्

१. इक्षुं भक्षयितुम् इभस्य कीदृशो मुहूर्तः ?

५९.९. पादपे-वृक्षे। ५९.१७.दलितं-खण्डशो विभक्तम्। ५९.१९. शैलदघ्नेषु-पर्वतपरिमाणेषु। ऐलबिलेन- कुबेरेण, लक्षणया धनिकेन। चैलधावस्य-रजकस्य, लक्षणया दरिद्रस्य। कैलासदघ्नम्-कैलासपर्वत-परिमाणकम्। धनिकस्य पापफलं दरिद्रस्योपरि क्षिप्यत इत्यर्थः। ६०.१. इभस्य-गजस्य।

२. ग्राहेण ग्रस्यमानानां ग्रहाः किम् उपकुर्युः ?
३. नवापि ग्रहा नोद्धरन्ति निद्रालून् जनान् ।
४. निकृष्टा निटिलं निन्दन्ति।
५. लोलबुद्धिर्ललाटं घट्टयति।
६. शीर्षं स्वयं भङ्क्त्वा शनीश्वरं भर्त्सयति।
७. शाते जाते भुजाय ताली, शोके स्फीते ग्रहाय गाली।
८. सूर्यः संसर्पति व्योम्नि संसर्पं समधीत्य किम् ?
९. स्वके ललाटे स्वयमेव लिख्यते। [७४२]

## ६१.गर्वः

१. असत्यपि वर्षणे, स्फूर्जथुः कर्णभित्।
२. अहंयुर्गोमायुर्गिरिमाज्ञापयति।
३. अहमपि वीरः सदने शूरः।
४. अहल्लिकस्य नासाम् अहश्चिच्छित्सति !
५. गरुडाय डयनं चटकः शिक्षते।
६. गर्ववतां शिरसि दर्वीताडनम्।
७. गह्वरे गौधेर एव गरुडः।

६०.२.ग्राहेण-मकरेण। ६०.४.निटिलं-ललाटम्। ६०.७.शाते-सुखे(शर्म-शातसुखानि च इत्यमरः स्मर्यताम्।)। स्फीते-वृद्धिं गते -स्फायी वृद्धौ। ६०.८.संसर्पम्-अधिकं मासम्। प्राचीनोऽयं शब्दस्तैत्तिरीयब्राह्मणेऽस्ति। ६१.२.अहंयुः-अहंकारी। गोमायुः-शृगालः। ६१.४.अहल्लिकस्य-रात्रौ दृश्यमानस्य पिशाचविशेषस्य। (बृहदारण्यकोपनिषदि ३.९.२५) चिच्छित्सति-छेत्तुमिच्छति। ६१.७.गह्वरे-गुहायाम्। गौधेरः-गोधिका।





८. गौर्द्वौ शृङ्गौ, गर्वस्य नव शृङ्गाः।
९. दम्भो वा कुयशःस्तम्भो वा ?
१०. दर्पसर्पो दारिद्र्येण दीनो बभूव।
११. दिवान्धो देवान्धसं दित्सति।
१२. नासिकया भूमिंस्पृक्षु महामल्लेषु चमरपुच्छः सोरुताडं गर्जति।
१३. पततोऽप्युदरम् उत्तानम्।
१४. पर्पटीं कर्तुमजानन् पौरोगवपदवीं काङ्क्षते।
१५. पातुं जलं नास्ति, "पायसं पित्तलपात्रे किम् " इति जगर्ज।
१६. भिक्षाजीवस्य स्वप्ने भृत्यस्तु कुबेरः !
१७. भिक्षाधीश्वरो यक्षाधीश्वरं पादमर्दनायाज्ञापयति !
१८. मठे नष्टेऽपि हठः शिष्टः।
१९. मया गप्पे विकीर्णेऽपि ममान्वयः सत्यहरिश्चन्द्रस्य।
२०. मां चक्रवर्तिनं कृत्वा त्वं राजा वा भव, सामन्तो वा भव।
२१. मुरजस्य स्थाने शब्ददम्भः मुनेरस्थाने मौनदम्भः।
२२. मुष्टौ मे विष्टपत्रयी।

६१.११. दिवान्धः-घूकः। देवान्धसम्-देवयोग्यमन्नम्। ६१.१२.चमरपुच्छः-Squirrel ६१.१३.उत्तानम्-ऊर्ध्वमुखम्। ६१.१४.पौरोगवः-पाचकानाम् अध्यक्षः। ६१.१६.भिक्षाजीवस्य-भिक्षुकस्य। ६१.१९.गप्पे-अत्यन्तासत्ये वचसि। 'न संभवतिया वार्ता लोके सा गप्पमुच्यते।' इति तल्लक्षणं मया कुत्रापि पठितम्। ६१.२२.विष्टपम्-जगत्।

२३. यवागूपायी सुवर्णमौल्यं जिज्ञासते।

२४. वामनं दृष्ट्वा खर्वो गर्वं बिभर्ति।

२५. शृङ्गवता शृगालेन उपद्रवोऽधिकः।

२६. सर्वतोदिशं हितं गर्वहीनानाम्।

२७. सर्वे पाचकाः स्वपाकं नलपाकं ब्रुवते।

२८. सर्वेषु सर्वाधिपेषु गर्वस्य साम्राज्यम्।

२९. हलं किंचुलुको हन्तुं यतते ! [७७१]

## ६२.सामर्थ्यहीनता

१. अङ्गुलीदघ्नस्य कलविङ्कस्य भङ्गलीला गृध्रैः !

२. अजातशत्रुः सुजातजाड्यः।

३. अदृष्टहिमालयानां भस्मराशिरेव पर्वतराजः।

४. अरित्रमजानानां नौकायां किं कृत्यम् ?

५. आसवपानमेव भीरोर्वीरपाणम्।

६. कच्चरपरीवाह एव पङ्को रासभस्य भागीरथी।

७. कनिक्रन्दन्ति कर्माशूषाः।

८. कर्णेटिरिटिरिणा किमपि न साध्यते।

६१.२९.किंचुलुकः-गण्डूपदी Earthworm.६२.१.अङ्गुलीदघ्नस्य-अङ्गुली-परिणामस्य।कलविङ्कस्य-चटकस्य।६२.२.अजातशत्रुः-युधिष्ठिरः। ६२.४. अरित्रम्-उडुपस्य जले नोदनायोपयुज्यमानो दण्डाकारकः सामग्रीविशेषः। ६२.५.आसवः-मद्यम्।वीरपाणम्-युद्धे क्रियमाणं पानम्।६२.७.कनिक्रन्दन्ति -अतिशयेन उच्चैर्वा गर्जन्ति। वैदिकोऽयं शब्दः।कर्मणि अशूषाः-बलहीनाः। शूषशब्दो वैदिको बलार्थकः।६२.८.कर्णेटिरिटिरिणा-किमपि जल्पित्वा जीवता सामर्थ्यहीनेन।('कर्णे किमपि जल्पित्वा जीवति, नास्य विक्रम इति भावः'-





९. कर्दमे लुण्ठनं किटीनामभ्यञ्जनम्।

१०. कापेये शक्तिशून्यः कपिर्वृक्षमाक्षिपति।

११. गन्धमूषिका किं गन्धमादनं गिरति ?

१२. झञ्झां किं जरद्गवः प्रतिरुणद्धि ?

१३. दर्वीमधिक्षिपन्ति दुष्पाचकाः।

१४. भग्नदन्तानां शरावे पृथुकतण्डुलः।

१५. भानुं किं वर्णयन्त्यभिनिम्रुक्ताः ?

१६. मशको मृगाधिपं भाययति।

१७. महिषस्य किं मार्जारः प्रतिमल्लः ?

१८. मूषिकमल्लं मातङ्गमाणवको मर्दयति।

गणरत्नमहोदधिः(पद्यसंख्या १०४) ६२.९.किटीनां-वराहाणाम्। ६२.११. गन्धमादनं-पर्वतविशेषम्।गिरति-गिलति।६२.१२.झञ्झाम्-वातं स-वृष्टिकम्।जरद्गवः-वृद्धो वृषभः।६२.१५.भानुं-रूढ्योदयमानं सूर्यम्। अभिनिम्रुक्ताः-अत्यलसा ये सूर्यास्तात् प्रागेव स्वपन्ति। 'सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च।अंशुमानभिनिम्रुक्ताभ्युदितौ तौ यथाक्रमम्।' इत्यमरः।अत्र 'अभिनिर्मुक्त' इत्यपपाठः।अन्धपरम्परया व्याख्यासु कोशादिषु च 'अभिनिर्मुक्त' इत्येव पाठोऽन्वसारि।वस्तुतस्तु 'म्रुचु गतौ' इति धातोर्निपूर्वकादस्तमयार्थकात् 'निम्रुक्तः','निम्रुक्', 'निम्रोचन्' इत्यादयः प्रयोगाः सिद्ध्यन्ति। 'निम्रोचन्नधरान् कृधि','उषाश्च तस्मै निम्रुक्च', 'श्रद्धाँ सूर्यस्य निम्रुचि' 'या इष्टा उषसो निम्रुचश्च' इत्यादयो वैदिकाः प्रयोगाः।तैत्तिरीयब्राह्मणे चायं प्रयोगः-"देवा वै हविर्भृत्वाब्रुवन्।कस्मिन्निदं म्रक्ष्यामह इति।आप्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते।सूर्याभिनिम्रुक्तः कुनखिनि।" **शिष्टप्रयोग-संग्रहे** तिरुमङ्गलं नडादूर् नरसिंहाचार्यरचिते (सनातनधर्मकार्यालयः, ट्रिप्लिकेन्, तमिळुनाडु १९३४) प्रपञ्चोऽस्य द्रष्टव्यः।

१९. लवणस्य लोपे वारिधिना वैरम्।
२०. वस्त्रसौन्दर्यं किं विजानाति दासेरकः ?
२१. वायुं विदारयितुं विविधान् व्यायामान् विदधाति।
२२. शृगालेन शप्तः शैलः किं शीर्यते ? [७९३]

## ६३.धार्ष्ट्यम्

१. आक्रोशेन राक्षसेश्वरं प्रणामयते।
२. गर्जनमेव दुर्बलानाम् अर्जनम्।
३. गलेन गर्जन्तं बिलेशयं दृष्ट्वा स्तम्बेरमः स्विद्यति।
४. दण्डधारिणी पिपीलिका चण्डव्याघ्रं कम्पयते।
५. देवताऽस्मि गलिता नभसोऽहं
पावना मम समेऽपि विलासाः।
६. नखे दर्शिते सुखेन सिद्धिः।
७. मड्डुकाद् भीता लड्डुकं यच्छन्ति।
८. हुंकारेण लङ्केश्वरं किंकरं कुरुते। [८०१]

## ६४.धूर्ताः

१. एकमलीकं सर्वं गप्पम्।
२. कर्मपापिष्ठा धर्मदेवेन शपन्ते।
३. गप्पेश्वराणां सन्निधौ मिथ्यावाचां दासत्वम्।

६२.२०.दासेरकः-गर्दभः। ६३.३.बिलेशयम्-मूषिकम्। स्तम्बेरमः-गजः। ६३.५.समेऽपि-सर्वेऽपि। ६३.७.मड्डुकात्-अवनद्धवाद्यविशेषात्। ६४.१. अलीकम्-असत्यम्।





४. चाणक्यचेतसो माणिक्यं वचनम्।
५. दण्डवत् प्रणम्य दशार्धपूजां करोति।
६. देवो वाचा पूर्वदेवश्च वृत्त्या।
७. देहं सुहृदो दयया दारयति।
८. धगधगायमाने परधामनि धान्यं निजं पिपक्षति ।
९. पादयोः प्रणिपत्य पादाङ्गुलीश्छिनत्ति।
१०. प्रणिपातं नाटयन् पार्ष्णिं गृहीत्वा पातयामास।
११. प्रतारकस्य वचने पलाण्डुरेवाम्रफलम्।
१२. ब्रह्मज्ञानं न्यूनं, जिह्मं कर्म तु नोनम्।
१३. भण्डेन भगवद्गीतोपदेशः।
१४. भाषा श्लक्ष्णा भावः कुसृतिः।
१५. मयूरवन्मनोहरो व्यंसकवद् विश्वासध्वंसकः।
१६. मिथ्यामतिः सत्येन शपन् पटहं वादयति।
१७. लोकोक्तिर्वा छेकोक्तिर्वा ?
१८. लोकोद्धारं नटन् काकोदरो भेकान् भक्षयामास।
१९. वक्रबुद्धिः शक्रं जयति !
२०. वरीयान् भण्डेषु दण्डोपायः।
२१. वाक्चतुरो वा वागुरिको वा ?

६४.५.दशार्धपूजाम्-कपोले चपेटिकाम्। दशानाम्(लक्षणया दशाङ्गुलीनाम्)अर्धं-पञ्च(लक्षणयैकः करः)। भरटकप्रहसनाख्ये जैनग्रन्थे शब्दोऽयमस्तीति श्रूयते। ६४.६.पूर्वदेवः-दैत्यः। पूर्वदेवाःसुरद्विष इत्यमरः। ६४.८.पिपक्षति-पक्तुमिच्छति। ६४.११.प्रतारकस्य-वञ्चकस्य। ६४.१२.नोनम्-न+ ऊनम्। ६४.१४.श्लक्ष्णा-उच्चा-वचत्वहीना। कुसृतिः-वञ्चना। ६४.१५.व्यंसकः-धूर्तः। ६४.१८.काकोदरः-सर्पः। ६४.२१. वागुरिकः-वागुरया (=मृगादिग्रहणार्थेन जालेन)मृगान् ग्रहीता व्याधः।

२२. शठाः शास्त्राण्यालभन्ते।
२३. सत्यां गप्पवात्यायां सत्यं नरके पतितम्।
२४. स्खलित्वा पतन्ति परिमृष्टे चत्वरे ।
२५. स्मितं कृत्वा स्वर्णं चोरयति।
२६. हृदयङ्गमं रूपं, हृदयन्तपा वाचः। [८२७]

## ६५.नाटकम्

१. अतिशुचमभिनय मृतिमभिनयामि ।
२. अभिनयजानक्या अष्टौ वल्लभाः।
३. अभिनयपटूनाम् आरभट्येव जीविका।
४. अवन्यां पत त्वम्, " अङ्घो, अङ्घो " इति रोदिमि।
५. आटोपभट्टस्यारभटीं पश्य।
६. आटोपवतो मर्कटस्य लाङ्गूले पुष्पगुच्छम्।
७. आडम्बरम् आटोपं गिलति।
८. ओङ्कारो ह्रीङ्कारापेक्षया भयङ्करतरः।
९. करणं मृदोऽदनं, कत्थनं खेलति खे ।
१०. कृशां देवतां कुहनाभक्तो दृशा भाययति।
११. नवीनभीष्मस्य प्रतिसप्ताहं नूतना सन्ततिः।
१२. नाटकयोधस्य शब्दकोषे शिञ्जिनीपदस्य गुञ्जाफलमित्यर्थः।
१३. नाटकरामस्य कति सीताः ?

६४.२२.आलभन्ते-किमपि स्पृष्ट्वा सत्यापयन्ति, शपन्ते।६४.२४.परिमृष्टे-सुपरिष्कृते।६५.९.अदनं-भक्षणम्।६५.१२.खे-आकाशे।६५.१२. शिञ्जिनी-धनुषो रज्जुः।





१४. नाटकसाधोराटोप एवाधिकः।
१५. नाटके निपुणानां सहस्रं संज्ञाः।
१६. पुण्ड्रं धृत्वा पाण्डित्यं नाटयति।
१७. बहिः शान्तो बहुरूपधारी।
१८. मलीमसबुद्धीनां मनोज्ञोऽभिनयः।
१९. प्रियेऽहमित्युक्त्वा मिष्टान्नं भक्षयति।
२०. शौभिकानां नाटकमेव शोभनं शीलम्।
२१. हाटकार्थं नाटकम्। [८४८]

## ६६.कृतज्ञता

१. अमृतं दत्तवद्भ्यो न्यूनतरम् अपूपं वापि देहि।
२. गुडपाके दत्ते मृडभूत्या सिञ्चति।
३. सलिलं दत्तवते सार्वभौमत्वं ददाति। [८५१]

## ६७.सज्जनाः

१. द्वावपि करौ पावनतरौ।
२. पद्मिना हता पद्धतिरेव पद्धतिः।
३. मनः पवित्रं द्वेषलवित्रम्।

६५.१६.पुण्ड्रं-विशिष्टाभिर्मृद्भिर्भस्मना वा देहे क्रियमाणा पट्टिका स्वकीयश्रद्धायाः संप्रदायस्य च प्रदर्शनार्था।६५.१८.मलीमसबुद्धीनां-मलिनचित्तानाम्। ६५.२०.शौभिकानां-नटानाम्।एतेषां प्रस्तावो भाष्ये।(अष्टा.३.१.२६)६७.२.पद्मिना-गजेन।हता-गता।हन हिंसागत्योः।६७.३.लवित्रम्-कर्तनार्थं साधनम्।

४. वल्मीकेऽपि वज्रं वीक्षन्ते विपुलाशयाः।

५. विशुद्धबुद्धिर्विजयते विश्वम्।

६. श्रद्धालूनां शुद्धा सिद्धिः।

७. सर्वत्र गुणदर्शी सौगन्धिकं साक्षात्करोति
मरुस्थलेऽपि ।

८. सारल्यमेव सौजन्यम्।

९. सुमनसां सकलं समञ्जसम्।

१०. स्वस्ति करति, शान्तिं किरति।

११. हृदयं शुद्धं शान्तिसमृद्धम्।

१२. हृदयस्य भाषां हृदयालुर्जानीते। [८६३]

## ६८.सभ्याः

१. आघाटेऽनतिक्रान्ते पश्यतोमारोऽपि प्राणसखः।

२. चरिते चारुणि चतुर्दश भुवनानि तव चरणं
चुम्बन्ति।

३. चारुचरिताः, शान्तिसरिताः।

४. भद्रचरितानामपि रौद्रा अपवादाः।

५. मा कृन्तापरवाक्यं स्वगिरा
यदि मैत्री तेऽभीष्टा रुचिरा।

६. सभ्याद् बिभ्यति सूकराः । [८६९]

---

६७.१०.करति-करोति। कृधातोः शप्। वैदिकोऽयं प्रयोगः। ६८.१.आघाटे-सीमायाम्। पश्यतोमारः-Bandit.६८.५.कृन्त-खण्डय। कर्तयेति वा।





## ६९.स्मितम्

१. मुखेन हसन्ति सुखेन वसन्ति।

२. स्मयमाना सूकरी स्वर्गीया सुन्दरी।

३. स्मितं सज्जनानां संपत्।

४. स्मितेन सर्वे जीयन्ते।

५. स्मित्वा साधुः साधयति। [८७४]

## ७०.कृतघ्नता

१. अन्नं जग्ध्वा फूत्करोति।

२. अरित्रे करोत्यवधीरणाम् उडुपः।

३. आरूढायामट्टालिकायाम् अधिरोहिण्यां का चिन्ता?

४. उडुपः फटाटोपमुदधौ करोति।

५. उदरपूरं भुक्त्वा वदनपूरमधिक्षिपति।

६. उपकारे कृते रिपवो भवन्ति।

७. ओदनं दत्तवन्तं जनं रोदयन्ति।

८. ओदने परिवेषिते पाडनं फलम्।

९. करुणायां दर्शितायां कशया प्रहारः।

१०. गुड एव गरः संवृत्तः।

११. गुडपाकं लीढ्वा गुरुनिन्दां निष्ठीवति।

---

७०.१.जग्ध्वा-भक्षयित्वा। अद भक्षणे। ७०.३.अधिरोहिण्यां-निःश्रेण्याम्। ७०.४.उदधौ-उदधिविषये। विषयसप्तमी। ७०.८.पाडनं-पादेन ताडनम्। मया सृष्टमिदं पदम्। ७०.१०.गरः-विषम्।

१२. भवनादानं समाप्य ''तव नामधेयं किम् ''इति
पृच्छति।
१३. शुभे कृते शापमुत्सर्जति। [८८७]

## ७१.नीचाः

१. अपकीर्तिरपवित्रहृदां स्फूर्तिः।
२. अयोग्यान् सौभाग्यलक्ष्मीरयते।
३. अस्थिहीनाया जिह्वाया अनवरोधम् एजनम्।
४. ईतिः परेषामस्तु, ममेयमेव रीतिः।
५. कलुषितमतेः कनकधाराऽपि कच्चरपरीवाहः।
६. कारवेल्लचक्षुष्काणां भुवनं भूरि तिक्तम्।
७. कुहनावतामग्रे पृतनावतामपि मृदि लोठनम्।
८. किट्टं नापगच्छति पट्टाभिषेकेण।
९. क्षुद्रबुद्धेः क्षौद्रमपि प्राप्तम्।
१०. खलम् आलिलिङ्गिषुः खड्गं प्रीत्या लेढि।
११. गोप्रकाण्डस्य गौरवं गर्दभो न गणयति।
१२. चारुरूपा अपि घोरवर्पसो दूषितदृश्वनाम्।

---

७०.१२.भवनादानं-भवनस्य गृहस्य, आदानं स्वीकारम्। भवनस्य दानं कृतवतः परिचयो नास्तीतीवाभिनयतीत्यर्थः। ७१.२.अयते-गच्छति। ७१.३.अनवरोधम्-रोधरहितम्। एजनम्-कम्पनम्। ७१.४.ईतिः-पीडा। ७१.७.पृतना-सेना। ७१.८. किट्टं-मालिन्यम्। ७१.९.क्षौद्रं-मधु। ७१.१०.आलिलिङ्गिषुः-आलिङ्गितुमिच्छुः। ७१.११.गोप्रकाण्डस्य-गोश्रेष्ठस्य। ७१.१२.घोरवर्पसः-भयङ्करशरीराः। वैदिकोऽयं शब्दः।





१३. तुच्छोऽपि चमरपुच्छोऽपि।
१४. दुर्दमः कर्दमः।
१५. दुर्व्यवहारिणां दिव्योपदेशाः।
१६. नीचेषु नाराच एव नीतिः।
१७. परनिन्दा पायसं पिशुनानाम्।
१८. पराक्षेपः केषाञ्चिद् विराभ्यासः।
१९. पापिष्ठानां प्रचुरमायुः।
२०. पिशाचेन पुराणप्रवचनम्।
२१. प्रदत्ते तृणे प्रस्तुम्पति।
२२. भीरोरार्याद् भीतैर्भ्रान्तैः शूरोऽनार्यः प्रीत्या सेव्यः।
२३. लज्जाशून्याः सकलैर्मान्याः।
२४. लोप्त्रेण जीविका लोलशीलस्य पालकस्य।
२५. विश्वासघाती वस्त्राञ्चले वृश्चिकः।
२६. वृतिं लङ्घमाना गोधा व्रतमुपदिशति सीमानतिक्रमणे।
२७. शीलभ्रष्टैः शान्त्युपदेशः।
२८. सर्वत्र मृदेव सीसकदृष्टीनाम्।
२९. स्वयं कृतं सुवर्णं परकृतं कुवर्णम्।
३०. स्वयं पश्यतोहराः परांश्चोरान् ब्रुवन्ति।

---

७१.१३.चमरपुच्छः- Squirrel. ७१.१६.नाराचः-अयोनिर्मितो बाणः। ७१.१८. विराभ्यासः-विराम-कालिकः अभ्यासः-hobby. मया सृष्टोऽयं शब्दः। ७१.२१.प्रस्तुम्पति-शृङ्गेण तुदति। ७१.२४.लोप्त्रेण-चोरितेन द्रव्येण। ७१.२६.गोधा-Salamander. सीमानतिक्रमणे-सीमातिक्रम-राहित्यविषये। विषयसप्तमी। ७१.३०. पश्यतोहराः-bandits.

३१. स्वयं मृदं खादति परमुखेषु च कर्दमं क्षिपति।

३२. स्वयमशिष्टाः परान् भ्रष्टान् भणन्ति।

३३. हन्तृकेन हितोपदेशः। [९२०]

### ७२.उत्कृष्टा अपकृष्टाश्च

१. तृण्यामध्ये तालतरुः।

२. महातरुरिति भ्रमः स्नुहितरौ महान् कोषतः।

३. शङ्कुकर्णात् तिष्ठतः शुण्डालः शयानः शोभनतरः।

४. शाल्मल्यपि वृक्षः शाखोटकोऽपि वृक्षः।

५. षट् पादा मक्षिकाया मधुमक्षिकायाश्च। [९२५]

### ७३.अधिकारिणः

१. अधिकारिणाम् अष्ट वदनानि।

२. अधिकारे दत्ते बधिराय, सर्वेषां कर्णं छेदयामास।

३. अधिकृतो रासभः प्रतिजनं पाडयति।

४. आस्यस्य नीचोर्ध्वमेजने भुजास्फालनं, तिर्यक् कम्पने शिरस्ताडनम्।

५. चित्रकनखाद् अबिभ्यतोऽप्यधिकारिमुखाद् वेपन्ते।

६. पीठोपविष्टो दासेरकः परमज्ञानी।

७२.१.तृण्या-तृणानां समूहः।७२.२.महातरुः-स्नुहिः।'स्नुहिर्वज्रो महातरुः' इत्यभिधानचिन्तामणिः।कोषतः-कोषस्याभिधानचिन्तामण्यादेः कारणात्।वस्तुतस्तु महातरुत्वरूपधर्मस्तस्य नास्ति।७२.३.शङ्कुकर्णात्-गर्दभात्।शुण्डालः-गजः।७२.४.शाखोटकः-भूतावासो वृक्षविशेषः।७३.४.एजने-कम्पने।७३.६.दासेरकः-गर्दभः।





७. बधिरमधिकारिणां रुधिरम्। [९३२]

### ७४.मध्यमाः

१. कण्टकेनापि संधत्ते, कार्पासेनापि संधत्ते।

२. कह्वोऽपि तृप्यात् कुलीरकोऽपि जीव्यात्।

३. घण्टापथः सखा भूयात्, कुञ्जरकुथः सुखाय स्यात्।

४. नकुलं लिम्पन्ति तैलेन, नागं लिम्पन्ति नवनीतेन।

५. लुण्टाकेन लीला माऽस्तु, सज्जनेन संगो माऽस्तु।[९३७]

### ७५.पक्षपातः

१. जीर्णदेहोऽपि मम सखा ज्यैष्ठिकेन्द्रः।

२. प्रसूतः सूकरोऽपि प्रसूतवतां लालनाय।

३. मदीयः कर्दम एव मम कृते पीयूषसागरः।

४. मदीयो बान्धवः खरोऽपि सैन्धवः। [९४१]

### ७६.धीराः

१. अहमस्म्यूर्जा, मां तर्जयितुं स्फूर्जथुर्न शक्नोति।

७४.२.कह्वः-बकः।७४.३. घण्टापथः-राजमार्गः।कुञ्जरस्य-गजस्य। कुथः-गजोपरि उपवेष्टुम् आच्छादनार्थं च स्थापनीयं वस्त्रम्।यद्यपि केवलेन कुथशब्देनैव गजस्यैष इति बोधो भवत्येवान्यार्थेऽस्याप्रयुक्तत्वात्। तथापि कुञ्जरशब्दस्यात्र प्रयोगः करिकलभ-पुष्पमालादि-शब्दवत् समर्थनीयः।७४.५.लुण्टाकेन-चोरेण।७५.१.ज्यैष्ठिकेन्द्रः-मल्लाधीशः। ७५.४.सैन्धवः-अश्वः।

२. धीरस्वर्गः कण्टकवर्गः। [९४३]

## ७७.मद्यपानम्

१. मदिरामत्ता मुदिरान् निन्दन्ति।

२. मद्यपानां शीधुरेव महादेशिकः साधुः।

३. मद्यमेव महास्वर्गः।

४. मन्दीभूतं मस्तिष्कं मैरेये मग्नानाम्। [९४७]

## ७८.मुधा घोषणा

१. अमितालापः शून्यस्तापः।

२. मर्दलैरारम्भो म्लाना समाप्तिः।

३. स्फूर्जथोर्गर्जनं, क्षुद्रलोष्टार्जनम्। [९५०]

## ७९.मूर्खाः

१. आक्रोशः सोरस्ताडम् आदत्ते भूरिवित्ते।

२. आक्रोशो युक्तिहीनानाम् आयुधम्।

३. आम्रस्य पुरस्तादाम्रेडयन्ति स्वादुलक्षणम्।

४. आशया राजानं दृष्ट्वा माषं पारितोषिकत्वेनानिनाय।

५. उत्संगे पतितं निधिं पाडयित्वा मृत्संगाय हस्तं प्रसारयति।

---

७७.१.मुदिरान्-मेघान्।७७.२.शीधुः-मद्यविशेषः।७७.४.मैरेये-मद्य-विशेषे।७९.१.आदत्ते-स्वीकृते सति।सत्सप्तमी। ७९.३.आम्रेडयन्ति-पुनः पुनरुच्चारयन्ति।७९.५. पाडयित्वा-पादेन प्रहृत्य।





६. एकस्य पटच्चरस्य धारणाय चतस्रः मिथश्छुरिकां दर्शयन्ते।

७. कञ्चनापि वञ्चयितुं पञ्चमान्यथाभावानां न शक्यते।

८. कनकं विक्रीय कच्चरं क्रीणाति।

९. कर्कटो विश्वसिति कर्करेटौ।

१०. काकिण्यां कौशल्यं कार्षापणे दौर्बल्यम्।

११. कार्षापणं विक्रीय करीषं क्रीणाति।

१२. काशीं गत्वा क्लेशान् आनिनाय।

१३. किङ्कार्यमूढो लङ्केश्वरकैङ्कर्येण सङ्कटमनुभवति।

१४. कुबेरस्य पुरस्तात् कुस्तुम्भरीं प्रार्थयते।

१५. कोलाहलं कर्तुं काहल्या निमन्त्रणा।

१६. गजस्योपर्युपविश्य गर्दभेनालिङ्ग्यते।

१७. गाढेन रोदनेन मूढो बृहस्पत्याचार्यायते वा ?

१८. गुञ्जैव मर्कटस्य माणिक्यम्।

१९. चण्डव्याघ्रे पण्डितोपदेशः।

२०. जायस्वेत्युक्ते म्रियस्वेति शृणुते।

२१. तेजस्तावन्नास्तीति सोरस्ताडं प्ररोदनम्।

२२. देवानांप्रियाय दुकूले दत्ते दिवाभीतमाच्छादयति।

---

७९.६.पटच्चरस्य-जीर्णवस्त्रस्य।७९.७.पञ्चमान्यथाभावानाम्-रासभानाम्। अस्य शब्दस्येदमर्थे प्राप्तये कोषः कोऽपि नान्विष्यताम्। न लभ्यते तत्रायम्। अन्यथाभावाः पञ्चोच्यन्ते विश्वनाथेन भाषापरिच्छेदेऽनुमानप्रकरणे।पञ्चमस्तु रासभः।७९.८.कच्चरं-मालिन्यम्।७९.९.कर्करेटौ-महति बकविशेषे। ७९.१५. काहल्या-अवनद्धवाद्यविशेषेण।७९.२२.दिवाभीतं-घूकम्।

२३. देवो देव इत्याक्रुश्य लालिकस्य लाङ्गूले लोध्ररसं लिम्पति।

२४. द्रविणं दत्वा मरणं क्रीणाति।

२५. नन्दने स्थित्वा नरके पतति।

२६. निर्विवेकानां खर्वबुद्धिर्देवता।

२७. पर्वताय प्रस्तरदानम् !

२८. पलायितायां पिशाचिकायाम् उच्चाटनमन्त्रे मुसलामुसलि।

२९. पालनं चिकीर्षुर्लालनं कृत्वा हालाहलमपिबत्।

३०. पिपीलिकाशववाहनाय पञ्च मल्ला आगताः।

३१. बडिशं विकीर्य तिमिङ्गलं काङ्क्षते।

३२. बाहुमूले स्थितं छत्रं राहुमूले गवेषयति।

३३. भर्म गृहीत्वा भूषणाय रुदन्ति।

३४. भिक्षाको यक्षाधीशे भर्ममयं भिक्षाभाजनं प्रार्थयते।

३५. भ्रान्त्वा त्रीन् लोकान् भुङ्क्ते कपर्दिकाम्।

३६. मतिहीनानाम् अतिरेकः।

३७. मत्या हीना मिथ्या वदन्ति।

३८. मधुरं वचनं श्रुत्वा रुधिरगर्ते ममज्ज ।

३९. मन्दाकिनीं गत्वा मृदम् अखादत्।

७९.२३. लालिकस्य-महिषस्य। अयं भावः-देव देव इत्याक्रोशनपरस्य कस्यचिन्मूर्खस्य मनसि देवत्वधर्मवांस्तु महिषो, लक्षणया सामर्थ्यहीनः कोऽपि; न पुनः शक्तिमान् पुरुषः। ७९.३१. बडिशम्-धीवरैर्मीनाकर्षणाय उपयुज्यमानं वस्तु। Fishhook ७९.३३.भर्म-कनकम्।





४०. मस्तकं पुस्तके त्यक्त्वा मस्तिष्कं दूरतोऽत्यजत्।

४१. मीनान् ग्रहीतुकामो महोदधौ ममज्ज।

४२. मूढेषु हितमुपदिशन् गाढमूढः।

४३. मृगाणां पालनायेहामृगा नियुक्ताः।

४४. मृत्पिण्डे विश्वस्य महानदीं तितीर्षति।

४५. राजगर्दभः पाडितवान् इति हेतोर्ग्रामे पटहं वादयामास।

४६. राजसौधे कोलाहलं श्रुत्वा कर्णवेधः कारित एडमूकेन।

४७. लाक्षा दहनं लेढु किम् ?

४८. लालनाय वृद्धगृध्रं पालयन्ति।

४९. लीलां सिसृक्षुर्हालाहलं ससर्ज।

५०. वचनं पालयितुं कण्टकेन कण्ठो विद्धः।

५१. वनान्तर्वाहयति वाहिनीम् अश्रुणः।

५२. वन्ध्यं वृक्षं परितो वस्त्रमास्तृणीते।

५३. वारणासीं गत्वा विवादम् आनिनाय।

५४. विनष्टे वेतण्डे लाङ्गूलाय मुसलामुसलि।

५५. विश्वं विचिन्त्य विद्धनेत्रः संवृत्तः।

७९.४३.ईहामृगाः-वृकाः। ७९.४४.तितीर्षति-तरीतुमिच्छति। तृ+सन्। ७९.४६.एडमूकेन-वक्तुं श्रोतुं चाशिक्षितेन। ७९.५१.वाहिनीं-नदीम्। ७९.५२.पतन्ति फलानि संचिनोमीत्याशया। ७९.५५.अयं भावः-विश्वस्यैव योगक्षेमं चिन्तयति, स्वकीयां तत्संपादनेऽर्हतां वा विवेकं वा न प्राप्नोति, यत्फलतया स्वयं क्लेशानां भाजनं भवति।

५६. वृतिं न विरचयति, कडङ्गरीयान् धावयितुं
कृत्याकृतो याति।
५७. शिलां ग्रहीतुं जालं विकिरति।
५८. शीर्षे विशीर्णे बुद्धिरागता।
५९. शुल्कं विना प्राप्तमिति शल्कं वेणोर्दशत्यसौ।
६०. समृद्धौ लक्ष्मीपर्व, व्यृद्धौ भिक्षापर्व।
६१. सर्वैर्हसिते बधिरो घघति।
६२. सुवर्णशरावे लोष्टं प्रादुः।
६३. सुवर्णसूच्या नेत्रं विद्धम्।
६४. सूकरस्य पुरस्तात् सुखदुःखे प्रकटयन्ति।
६५. सूचीनिवार्यं कण्टकमुत्पाटयितुं दर्वी ?
६६. स्वपादं स्वयमेव चिच्छित्सति।
६७. हंसतूलिकातल्पे शयानानां स्वप्ने यवागूर्दृष्टा।
६८. हयमारुह्य हिङ्गु खादित्वा हाहाकारं चकार।
६९. हिडिम्बं ह्वलयितुं हुडुक्कां ताडयति।
७०. हीरकं धृत्वा हेम्ने हाहाकारं करोति। [१०२०]

७९.५६.वृतिम्-पशूनामन्तः-प्रवेशनिवारणार्थं केदारं परितः क्रियमाण-मावरणम्। कडङ्गरीयान्-बुसादिभक्षणाय आगच्छन्तीर्धेनूः। कृत्याकृतः-तन्त्रमन्त्रज्ञानं दुष्टाय कर्मणे उपयुञ्जानान्। Professionals in black magic ७९.६०.व्यृद्धौ-समृद्धिविरुद्धायां परिस्थित्याम्। ७९.६१. सर्वैर्हसनानन्तरम्,न तु तद्धसनसमकाले। घघति-उच्चैर्हसति,Guffaws। ७९.६६.चिच्छित्सति-छेत्तुम् इच्छति। छिद्+सन्। ७९.६९.ह्वलयितुं-कम्पयितुं, लक्षणया भाययितुम्। हुडुक्कां-लघुकायकम् अवनद्धवाद्यविशेषम्।





## ८०.रहस्यम्

१. कुड्यगतैः कर्णैरेकान्तः शोकान्तो जातः।
२. रहस्यं जुगोपयिषतां पटहाजीवेन सख्यं
रौरवनरकाय।
३. षट्कर्णेषु पतितं षोडशभुवनेषु प्रसृतम्। [१०२३]

## ८१.वार्धक्यम्

१. जरठस्यापि जठरं पटु।
२. जरायाम् अवरा बुद्धिः।
३. वयसि व्यतीते बाल्यं बंहते। [१०२६]

## ८२.सादृश्यम्

१. अलं वाचाटाय वावदूकः।
२. इति-ह-स्माय इति-ह-स्म।
३. ओदनः क्षुतः, ओतुः क्षुधितः।
४. काकदन्तान् गणयित्रा सह घूकशृङ्गं मापयितुः सख्यम्।
५. किटिः कर्दमं कणेहत्य वीक्षते।
६. किलस्य खलुः सदृशः।

८१.१.जरठस्य-वृद्धस्य। ८१.२.अ-वरा=अप्रशस्ता। ८१.३.बंहते-वृद्धिं गच्छति। बही वृद्धौ भ्वादिः। ८२.१.वाचाटाय-वादप्रियाय। वावदूकः-वादा-काङ्क्षी। ८२.३.ओतुः-बिडालः। ८२.५.किटिः-वराहः। कणेहत्य-संतृप्ति-जननपर्यन्तम्।

७. क्षिप्तमस्तिष्केषु उत्क्षिप्तवदाचरेत्।
८. क्षुब्धा देवा लुब्धा भक्ताः।
९. गर्दभेऽपि पुच्छं घोटकेऽपि पुच्छम्।
१०. गेहेपण्डितस्य सभाध्यक्षत्वे गोष्ठेपण्डितः प्रमाणम्।
११. घूकानां नर्तने भेकानां संगीतसंगीतिः।
१२. चर्पटसदृशः कर्पटः।
१३. जामात्रा शष्पिञ्जरे भक्षिते श्वशुरेण शिंशपा कबलीकृता।
१४. तिन्त्रिणीफलेन दाडिमस्य विवादः।
१५. दुष्टाय देवाय धूर्तो देवलः।
१६. नम्रा बुद्धिः कम्रा वाणी।
१७. पुच्छेन लाङ्गूलं युयुजे।
१८. पोषिते मूले पल्लवो हसति।
१९. मर्कटध्याने मण्डूकः साक्षी।
२०. मुसलेन ह्रदे लङ्घिते दण्डेन गिरिर्लङ्घितः ।
२१. मृगाधिपस्य वनेषु शक्तिः,मूषिकस्य बिलेषु युक्तिः।
२२. यावान् गरिमा तावाल्लँघिमा।
२३. वाचालानामाचार्यो वाचाटः।
२४. शाखिनः शाखा न भारः, पर्वतस्य प्रस्तरो न भारः।

८२.९.घोटके-अश्वे।८२.११.संगीतिः-गोष्ठीत्यर्थे प्राचीनः प्रयोगः। बौद्ध-संगीतिः स्मर्यताम्।८२.१२.चर्पटः-जीर्णवस्त्रम्।कर्पटः-जीर्णवस्त्रम्।८२.१३.शष्पिञ्जरे-तृणभेदे।८२.१५.देवलः-अर्चकः।





२५. शीधुं चूषय त्वम्, आसवमास्वादयाम्यहम्। [१०५१]

## ८३.वैसादृश्यम्

१. आकारः सुवर्णोऽप्याचारो दुर्वर्णः।
२. उद्धरामीति वदतः शिरस उत्पाटयामीति वदत्पुच्छम्।
३. उद्बल्यं पूतिगन्धि फलपुष्पं मधुरगन्धि।
४. कपर्दिकाधीश्वरस्य कनकाधीश्वर इति संज्ञा।
५. कुवेणी किं कुसुमगन्धं सूते ?
६. खल्वाटस्य शृङ्गाराय चूडामणिरुपायनीकृतः।
७. गजस्य शुण्डया गरुडस्य को लाभः ?
८. घोरभैरव्याः क्षीरदेवीत्यभिधानम्।
९. जिनापणे झषमौल्यं जिज्ञासते।
१०. जोषमुपविष्टानां देवानां पुरस्ताद् रोषभीषणा भक्ताः।
११. डिण्डिमभाषी पटहभाषिणं नीचैः शंसितुं प्रार्थितवान्।
१२. देव इति नामधेयं, दौर्जन्यं भागधेयम्।
१३. नक्रमुखी वक्रमुखीम् अपहसति।
१४. नरं चिकीर्षुर्वानरं चकार।
१५. निर्जितरतेः सुन्दरीमणेः कनीनिकैव नास्ति।

८२.२५.शीधुं-मद्यभेदम्।आसवं-मद्यभेदम्।८३.३.उद्बल्यम्- उद्भिज्जानां बल्यम्-Tonic for plants= Manure मया सृष्टोऽयं शब्दः। पूतिगन्धि-दुर्गन्धि।८३.५.कुवेणी-मत्स्याधानार्थः पिटकः।८३.९.झषः-मीनः।८३.१५.कनीनिका-अक्षिगोलकम्।

१६. परमेश्वराय पर्युषितं नैवेद्यम्।

१७. पातञ्जलं योगमभ्यस्य परमोग्रं शापं ददाति।

१८. पाताले कीदृशी पीयूषवार्ता ?

१९. पिशाचस्य पटवासकः !

२०. पुण्डरीकात् किं पूतिगन्धः स्रवति ?

२१. प्रदीपेन तमः प्रसूतम् !

२२. प्रसूतस्तु मद्यपायी, भर्त्सितास्तु वायुभक्षाः।

२३. बुद्धिं वदतां शुद्धिर्नास्ति।

२४. बोधं सिसृक्षोः क्रोधः किमर्थः ?

२५. भीकराकारः सूकरं दृष्ट्वा थरथरायते।

२६. भीमो वामनं विलोक्य ग्रामात् पलायते।

२७. मर्कटं पालयित्वा मनोजयाय दीक्षां धत्ते !

२८. मार्दङ्गिकस्य शङ्खेन किं कार्यम् ?

२९. मीमांसकस्य मातुलो मीनस्य मांसं मेध्यं मन्यते।

३०. मुदा अतिथौ आगते मृदा अलिम्पन्।

३१. मुमुक्षुर्मण्डूकैः साकं मौनविषयं महावादमारभते।

३२. मृगस्य शृङ्गे दृष्टे मृगाधिपस्य दंष्ट्रा बिभेति !

३३. यतिपतेः कतिकूपिकामात्रं मद्यम् ?

३४. रात्रौ यक्षादनं, दिवा भिक्षादनम्।

८३.१६.पर्युषितम्-गतरसं, ह्यो वा परह्यो वा सिद्ध आहारः। ८३.१९. पटवासकः-सुगन्धद्रव्यं, सौन्दर्यवर्धनार्थं वदने लेपनार्थो द्रव्यविशेषो वा। ८३.२०.पूतिगन्धः-दुर्गन्धः।८३.२९.मेध्यम्-पवित्रम्।८३.३४.अदनम्-भक्षणम्।





३५. रामग्रामे रावणः सार्वभौमः।

३६. वटिकाभाण्डे व्याघ्रपोतस्य किं विधेयम् ?

३७. वटो वट एव, घटो घट एव ।

३८. वत्सो वृषभो न, सेनापतिः सम्राण्न।

३९. वामनस्य भीमोदरम्।

४०. विक्षुभायां विक्षोभः !

४१. वेदान्तमधीत्य वैरं वर्धयति।

४२. शशकस्य किं शृगालेन मैत्री ?

४३. शिलीन्ध्रं प्रणन्तुं लाङ्गली प्रयतते।

४४. शुण्डापाने तक्रमन्विष्यति।

४५. शुभाशीर्वादे प्रार्थिते " श्वभ्रं गच्छ " इत्याक्रुशत्।

४६. शृङ्गाराय शिखायां शादः।

४७. संन्यस्तुमिच्छोः प्रतिमासं प्रत्यग्रः प्रणयः।

४८. सदने सुतसंततिः कुसूले तुषप्रततिः।

४९. सर्पभ्रान्त्या किंचुलुकम् अमारयन्।

५०. सर्वाङ्गसुन्दरः, किन्तु विग्रः।

५१. सामगानं चिकीर्षोः समागता हिक्का।

८३.४०.विक्षुभायां-छायायाम्।८३.४४.शुण्डापाने-मद्यापणे।८३.४५.श्वभ्रं-नरकम्। ८३.४६.शादः-कर्दमः।८३.४७.प्रत्यग्रः-नूतनः।८३.४८.सदने-गृहे सुतानामपि संततिरस्ति।न केवलं सुता अपि तु तत्सन्ततिरप्यस्ति।परन्तु किं प्रयोजनम्? कुसूलं-धान्यागारं पालयितुं कोऽपि न सिद्धः।फलत्वेन कीटैर्धान्यानि भक्षितानि। प्रततिः-समूहस्तु केवलं तुषाणामेवावशिष्टा। सुतास्तत्सुताश्चालसा इत्यभि-प्रायः। ८३.४९.किंचुलुकम्- गण्डूपदीम्।मृदि वर्तमानं जन्तुविशेषम्।Earth worm.८३.५०.विग्रः-नष्टनासिकः।

५२. सुजनता जडता न समं द्वयम्।

५३. सुष्ठु बुद्ध्वा दुष्ठु करोति।

५४. स्वप्ने दशकण्ठं कबलीकुर्वन्ति, जागरितास्तु द्विरेफाय साष्टाङ्गं प्रणिपतन्ति।

५५. स्वप्ने नन्दनं, जागरे क्रन्दनम्। [११०६]

## ८४.दर्पणः

१. अतदपि तदिव व्यदधान्मुकुरः।

२. अपघन! प्रतिबिम्बसि दर्पणेष्वयि मनो ! मम न प्रतिबिम्बसि।

३. आदर्शाद् बहिर्यद् वर्तते तदेवादर्शान्तः प्रतिबिम्ब्यते।

४. दर्पणे दक्षिणो वस्तुतस्तु वामः।

५. द्विपः किं दर्शे प्रतिबिम्ब्यत आदर्शे ?

६. मत्तावलोऽपि मुकुरे मुष्टिमेयः।

७. मन्मथम्मन्यमानो मुकुरं मङ्क्षु मोटितवान्।

८. सोऽर्थो वास्तविको यस्यैवादर्शे प्रतिबिम्बनम्।[१११४]

## ८५.व्यवहारः

१. अदृष्टायां कशायाम् आयुः शतानां शतम्।

---

८४.२.अपघन!-हे शरीर! ८४.५.द्विपः-गजः। दर्शे-अमावास्यायाम्। ८४.६.मत्तावलः-गजः। ८४.७.मङ्क्षु-झटिति।





२. अरित्रावलम्बनेन पारावारे परित्राणम्।

३. काण्डमिक्षोर्वीक्षस्व, मा कणिशम्।

४. कोपहीनता पापशून्यता।

५. गुडगणो मरिचकणेन गलहस्तितः।

६. गोप्यं गोपनीयमेव।

७. जिह्मैरपि युध्यस्व, ब्रह्मण्यपि वर्तस्व।

८. मस्तकज्ञानी पुस्तकज्ञानिनं कनिष्ठिकया धूनयति।

९. लोके शुद्धिः परमा सिद्धिः।

१०. वैविध्यं चिन्तनानां वैराग्यं वास्तविकम्।

११. शादो हस्ते, स्वादो रसनायाम्।

१२. स्वान्ते शान्ततमे दरे च दलिते दण्डोऽपि निःश्रेणिका।

१३. हलगताः प्राणाः कुसूले द्रोणाः। [११२७]

---

८५.२.अरित्रम्-उडुपेषु नोदनार्थमुपयुज्यमानः दण्डाकारः सामग्रीविशेषः। पारावारे-समुद्रे। ८५.३. कणिशं-सस्यमञ्जरी, सस्योर्ध्वभागः। इक्षोः कणिशं सुन्दरमपि, स्वादहीनम् फलप्रसूतिरहितं च। तत्रावधानं मा बधान,परन्तु,इक्षोः काण्डमास्वादयेत्यर्थः। बाह्यैः किं रूपैः, अन्तरङ्गं पश्येत्याकूतम्। ८५.५.गलहस्तितः-अर्धचन्द्रप्रयोगं लम्भितः। महानपि गुणोऽल्पेन दोषेण नश्यतीति भावः। ८५.७.जिह्मैः-कुटिलमतिभिः। ८५.८.धूनयति-कम्पनपूर्वकं निवारयति। ८५.१०. वैराग्यं-लोके विरागो न वैराग्यम्। केवलमेकस्मिन् दर्शनेऽतिसञ्जतया जायमाना ये मानसिका दोषास्ते विविधेषु दर्शनविषयेषु कुतूहले सति सुपरिहराः सन्तो वैराग्यं साधयन्तीति ममाभिप्रायः। कथं वाऽत्र मेधाविनो मन्यन्ते। ८५.१२.दरे-भये। ८५.१३.यदि कृषिको हले प्राणान् धत्ते, लक्षणया केदारे श्राम्यति, कुसूले-धान्यसंचयगृहे द्रोणाः-परिमाणं परिमातुमर्हा सामग्री कार्यकारिणी भवत्येव। सुभिक्षो भवति सः।

## ८६.विद्या

१. अइउणमविज्ञाय पाणिनिमाकारयति नियुद्धाय।
२. अपकारार्थम् उपनिषदाम् उपयोगः।
३. आचार्योपदेशो वा नीचा वाचो वा ?
४. आर्षान् ग्रन्थान् पठित्वा कार्षापणाय केशाकेशि करोति।
५. कठिनीविद्या केषाञ्चित् कठिना विद्या।
६. गुरोः पापेन घोरेण गृहीतः शिष्य उच्यते।
७. चोरः शिष्यश्छुरिकावान् आचार्यः।
८. निरक्षरभट्टाचार्यस्य नानाशास्त्रीति संज्ञा।
९. निरक्षरभट्टाचार्याय नैषधं काव्यम्।
१०. नैके गुरवो नाना भ्रान्तयः।
११. पठने लब्धं ज्ञानं रटने नष्टम्।
१२. पठित्वा पठित्वा शठोऽभवत्।
१३. पिशाचानां किं पण्डितभाषया ?
१४. पीठे स्थिते पाठेन किम् ?
१५. बोधोदयेऽपि शोधो विधेयः।
१६. बोधे जाते बुद्धिर्वक्रा।
१७. बोधे रुदिते बाधो हसति।

८६.१. नियुद्धाय-मल्लयुद्धाय।८६.५.कठिनी-लेखनसामग्री।यद्यपि कठिनत्वं नाम स्पर्शपरुषत्वं न क्लेशप्रदत्वम्।तथापि ग्रहणसुलभत्वं यत्र नास्ति तत्र ग्रहणे कोमलत्वप्रतियोगि परुषत्वमनुभूयत इति कारणात् कठिनशब्दस्य क्लेशरूपोऽर्थ आक्षिप्यते।





१८. महामहोपाध्यायमहिमान्वितभट्टाचार्यो वर्णमालामेव न जानाति।
१९. मूर्खाचार्यस्य मर्कटः शिष्यः।
२०. रोदनशीलस्य पुरस्ताद् वेदघोषः।
२१. वरवाङ्मयनिर्माणे परकायप्रवेशः।
२२. विद्यां वर्तने पश्य।
२३. विद्यावतां ग्रन्था एव पन्थाः।
२४. वीध्रबुद्धीनां वाचाटतैव वेदशास्त्राणि।
२५. शषसान् अबुद्ध्वा शास्त्राण्युपदिशति।
२६. शास्त्राण्यधीत्य शीर्षं कुट्टयति।
२७. संप्रदायः कम्प्र एव।
२८. सरस्वत्या प्रणतानां स्वान्तं शान्तम्।
२९. स्थूलायां त्वचायां सरस्वती न लगति। [११५६]

## ८७.ग्रन्थो मूलं व्याख्या च।

१. ग्रन्थं रिरचयिषुर्ग्रन्थिं ससर्ज।
२. ग्रन्थे मुद्रिते गर्वो गलितः।
३. टीका विकृता ट्वलयति मूलम्।
४. पिचुविषये पर्वतदघ्ना पृच्छा।
५. पुस्तकं पठित्वा दुस्तरं साधयति।

८६.२४.वीध्रबुद्धीनाम्-विमलमतीनाम्।८६.२७.कम्प्रः-कम्पनशीलः। कम्प+रन्।८७.३.ट्वलयति-कम्पयते।ट्वल कम्पने।८७.४.पिचुः-लघुः कार्पासपिण्डी।पर्वतदघ्ना-पर्वतपरिमाणा।

६. बादरायणस्य शिष्या भेदरायणा अभवन्।

७. मुद्रणानन्तरं रुद्रताण्डवम्।

८. मुद्रणे जाते मुखं म्लानम्।

९. मूलं मलिनं व्याख्यासख्यात्।

१०. लेखनमन्यद् रचना त्वन्या।

११. व्याख्या मूलं व्यपोहति।

१२. व्याख्या वा व्याघ्री वा ? [११६८]

## ८८.संशोधनं, ग्रन्थसंपादनं च

१. आर्द्रस्तूर्द्रः, घूघूकारस्तु घूकस्य।

२. कुक्करस्य गले माला कुक्कुटस्य कटौ कीला।

३. ग्लायन्तीं गण्डूपदीं गरुडो गिलति।

४. जलसेचनमन्येन, फलभक्षणमन्येन।

५. जुगुप्सितेषु चरितेषु जरतां गाथाः प्रमाणम्।

६. धन्यैरन्यैरुक्तमेतच्च तच्च।

७. पिप्पल्यास्तङ्क्नेन पुत्तिकायाः पर्वोत्सवः।

८. मृदु-लता व्रणिता, मुसलधीर्विनुता।

९. संशोधनं वा संयोधनं वा ?

---

८७.११.व्यपोहति-दूरं धावयति।८८.१.उर्द्रः-Otter.।श्रमोऽन्यस्य, कीर्तिरन्यस्येत्यर्थः।८८.२.कुक्करस्य-शुनः-(कार्यम् अ-कृतवतः)।कुक्कुटस्य-कार्यं कृतवतः।कीला-ज्वाला ८८.३.ग्लायन्तीं-कार्येण श्राम्यन्तीम्।गण्डूपदीं-Earth worm.८८.७.तङ्क्नेन-कृच्छ्रजीवनेन।पुत्तिका-White ant





१०. सौरिसदने स्थितानां स्तुतेः संशोधनमिति संज्ञा।

११. स्वेदः शशकस्य मोदः शृगालस्य। [११७९]

## ८९.सुभाषितम्

१. अभीकं जागृहि मृळीकं साध्नुहि।

२. असभ्येष्वार्योपदेशा अरुन्तुदाः।

३. अस्तीत्युक्ते स्वस्ति सिद्ध्यति।

४. कल्याणवाक्येषु कर्णे पतितेषु कापथे पथिकानां
कहकह-हसनम्।

५. नखिगणे निखिलो न केसरी लिखितकं न समं
सुभाषितम्।

६. पथीनां देशनां पवनः प्लावयति।

७. पद्यमवद्यं नैव सुवाणी, कण्टकिविटपी न च
निःश्रेणी।

८. मनोरथः सृज्यतां पथो रथः साध्यताम्।

---

८८.१०.सौरिः-यमः।८९.१.अभीकं-निर्भीकं, भयं यथा न भवति तथा। मृळीकं-सुखम्।वैदिकोऽयं शब्दः।८९.२.अरुन्तुदाः-पीडाकराः। ८९.४. कहकह-हसनम् (Guffaw or belly laugh)।शब्दोऽयं मया संस्कृतग्रन्थेषु न दृष्टः।परन्तु रुद्रभट्टीये जगन्नाथविजये (कन्नडभाषायां रचिते प्रौढे काव्ये ) दृष्टः(६.३२.)।कदाचित् केचन शब्दास्तत्सृष्टिं कर्त्र्यां भाषायां नष्टप्राया अपि तत्प्रभावितास्वितरासु भाषासु मुद्रितजीवा-वशेषाः(fossils) सन्तो गोचरीभवन्ति।अत्राप्येवं स्यात्।८९.५.लिखित-कम्-कुत्सितार्थे कन्।समं- सर्वम्।८९.६.पथीनां-पथि क्रियमाणाम्।देशनाम्-उपदेशम्।८९.७.अवद्यम्-निम्नस्तरीयम्।

९. रचितं सर्वं रामायणं न, सृष्टं सर्वं सुभाषितं न।

१०. रुचिरे कर्मणि रचिते जगति
प्रचिता कीर्तिः सुचिरं जयति ॥

११. विनयः स्वनति।

१२. शातकुम्भेन कुम्भकरणं नाडिन्धमस्य कार्यं न
कुम्भकारस्य।

१३. शोचिष्केशे ज्वलति सहसा शष्कुली भर्जनीया।

१४. सद्बुद्धीनां सरस्वत्येव सुभाषितम्।

१५. सभासु विजृम्भस्व,स्वभाभिर्वर्धस्व।

१६. सामान्या अपि स्वसिद्ध्या भूमान्या भवन्ति।

१७. सुभाषितं कत्थते स्वयं तु विवहते !

१८. सुभाषितं श्रुत्वा कुभावनां धरति।

१९. सुभाषितमेव सुजनस्यायुधम्।

२०. सुव्याहारेण सुव्यवहारः।

२१. सूकरः किं सुभाषितं जानाति ?

२२. हितोपदेशो वा हतोपदेशो वा ? [१२०१]

## ९०.आभाणकः

१. आभाणकहीनैः का भा संभाषणे ?

२. आभाणकं बोधि साम्राज्यं शाधि।

८९.१०. प्रचिता-संपुञ्जिता।८९.१२. शातकुम्भेन-सुवर्णेन।नाडिन्धमस्य-स्वर्णकारस्य।८९.१३. शोचिष्केशे-अग्नौ।शष्कुली-भक्ष्यविशेषः।अनुकूलायां परिस्थितौ झटिति तस्योपयोगं कुर्यादिति भावः।८९.१७.कत्थते-गर्वपूर्वकमात्मानं श्लाघते।





३. आभाणकं विना का भारती ?

४. आभाणकमादत्ते श्रीभाग्यान्याधत्ते।

५. आभाणकशास्त्रं तव भारति ! शस्त्रम्।

६. आभाणके सति को भारः ?

७. आभाणकैरारोग्यम्।

८. आभाणकैरालोकः।

९. आभाणको भूभानुः।

१०. आभाणको भूभूषणम्।

११. काले भणित आभाणके व्यालेशस्यापि शिरो
दोलायते।

१२. भजाभाणकं भुवो नाणकम्।

१३. भणाभाणकं गुणाधायकम्।

१४. लाभापेक्षुराभाणकं भाषेत।

१५. शोभाहीनानाम् आभाणकेन मानः।

१६. सुखमाभाणकभेदैः सर किं स्याद् बहुवेदैः ?

१७. स्वैरं रचितानाभासान् आभाणकवचोभिराशु हर।

१८. हास्यैराभाणको प्रस्तरं पुष्पीकरोति। [१२१९]

## ९१.वाग्व्यवहारः

१. एका छुरिका द्वे शकले।

२. जिह्वा प्रह्वा जागरूका जगत्याम्।

९०.१६.सुखं सर-गच्छ इत्यन्वयः।९१.२.प्रह्वा-नम्रा।

३. दिव्योऽप्यर्थो दीर्घवाक्येन दीर्णः।
४. ''धा '' शब्दस्यानुराधार्थो लगधेनैव धार्यते।
५. वचसैव गौरवं, वचसैव रौरवम्।
६. विस्तर एव कदाचित् सुस्तरः।
७. संक्षेपातिरेकः संक्षोभाय।
८. ''सौर्'' इत्यस्य 'सहोदर' इत्यर्थं सौभरिरेव वेद।
९. हर्षयति च धर्षयति च जनतां जनजिह्वा।
१०. ह्रस्वं हृद्यं च वाक्यं निशितमतिमतां भूमतः प्रेमपात्रम्। [१२२९]

## ९२.संगीतम्

१. गर्दभानां गानं मण्डूकानां प्लुतये।
२. गर्दभाय गान्धर्वो वेदः।
३. गातुं विवृतवदनस्यास्ये मशकः पतितः।
४. गायनस्य संगीतं श्रुत्वा गर्दभः पलायितः।
५. गायनानां न स्वरबोधः, स्तावकानां न श्रुतिबोधः।
६. चक्रिकां विस्मृत्य नागस्वरवादनम् ।

९१.४.लगधेन-तन्नाम्ना वेदाङ्गज्यौतिषकारेण।९१.८.सौः-सौभरेरेकार्थनाममालायां दत्तोऽयं विचित्रः शब्दो, विचित्रतरस्तदर्थश्च।वस्तुतस्तु सौभरिरेताद्दृङ्नामनिर्माणे तदर्थपरिकल्पने च बहुधाऽश्राम्यदिति ज्ञायते।तदीया द्व्यक्षर-नाममाला तु विचित्रतमा।एतत् सर्वं द्वयोरपि संपादकेन तत्रभवता एकनाथदत्तात्रेय-कुलकर्णिना इङ्ग्लीष्भाषायां स्फोरितम्।(Deccan college Pune 1955) ९२.६.चक्रिकाम्-वादनार्थमुपयुज्यमानां ह्रस्वां नलिकां-(Reed)....





७. छिन्ना जिह्वा गानारम्भे भग्नावङ्घ्रौ तालारम्भे ।
८. जरद्गायनस्य वदने धन्यासीरागः संन्यासी बभूव।
९. ताडिते सक्थिनि तालः संस्थितः।
१०. दासेरको मण्डूकवाशितेन दिव्यं समाधिं प्रविविक्षति।
११. पटहस्य कर्कशः शब्द एव परमोचितः।
१२. भव्यं रागमारभ्य भषकवदाक्रोशति।

...नागस्वरः-सुषिरवाद्यविशेषः।कर्णाटकसंगीते नितरां प्रसिद्धः। 'नागस्वर' इत्येव शुद्धा संज्ञा।All India Radio संस्थया तु 'नादस्वर' इत्यशुद्धं नाम प्रमादात् स्वीकृतम्।''त्यागराजमहाध्वजारोह '' इति मुद्दुस्वामि-दीक्षितीयायां गेयरचनायां 'नागस्वर' इत्येव पाठः।अस्मिन् विषये तत्रभवता डि.टि. ताताचार्यशिरोमणिना विरचितः ''अभिधेयविशेषः''(Journal of Sri Venkateshwara Oriental Institute 4-2.July December 1943 Pp.31-32)''-इति लेखो द्रष्टव्यः। आह हि तत्र सः-''शाबर एव दशमान्ते-'कालस्य लक्षणं हि पुरोडाशौ'-इति सूत्रविवरणावसरे यथा 'नागवेलायामागन्तव्यं शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति। यस्मिन् ग्रामे न नागाः, न शङ्खाः न पटहास्तस्मिन्नपि स एव कालः तत्र ह्यागमनं क्रियते' इति भाष्यते।तत्र नागशब्देन किमुच्यत इति विमर्शे यद्यपि स लोके गजवाचकतया सर्पवाचकतया च प्रसिद्धस्तथापि शङ्खपटहसमभिव्याहारबलात् तस्यात्र वाद्यविशेषवाचित्वमुचितमिति प्रतीतेरस्मत्प्रदेशे 'नागस्वन'इति प्रथितं यद् वाद्यं तदेवाकारतः सर्पसादृश्याद् गौण्या वृत्त्या इह नागपदेनाभिधित्सितमिति वक्तव्यम्।--एतेन यत् कस्माच्चित् कालात् प्राक् 'किं **नागस्वन** इति वाद्यस्य नामधेयम् उत **नादस्वन** इति ' इति बहवो विवदमाना आसन् तत्रापि प्रथमपक्षस्य किञ्चिदुपष्टम्भकं प्रदर्शितं भवति।''९२.९.सक्थिनि-ऊरौ।संस्थितः-मृतः।९२.१०.वाशितेन-तिरश्चां योग्येनाक्रोशेन। प्रविविक्षति-प्रवेष्टुम् इच्छति।प्र+विश्+सन्।
९२.१२.भषकः-श्वा।

१३. भैरवरागो वा रौरवनरको वा ?

१४. रागो रोगः तालो वेतालः, श्रुतिर्विस्मृतिः,
गान्धर्ववेदो गर्दभगानम्।

१५. लयं प्राप्ता जीवनाडी स्वरैः साकं स्पन्दते ।

१६. वराहस्य पुरो वेणुनादः।

१७. वेणुवादको वेणुना वीणावादकस्य कं कुट्टयति।

१८. वेणुवाद्यगता गोधा वादकस्याधरं दशेत्।

१९. स्वच्छं स्वरमविज्ञाय कच्छपीं हन्तुमुद्यताः।

२०. 'हाहा हूहू' इति द्राङ्क्षन् सौरं गानं सिसृक्षति।[१२४९]

## ९३.अभावुकाः

१. अ-रसिकैः सरस्वत्याः करपादभङ्गः।

२. गोमायुर्गौलरागं श्रावितः सन् 'नास्ति रुधिरं नास्ति
मांसं नास्ति चास्थी '' त्यवदत्। [१२५१]

## ९४.संघटना

१. अङ्घो! संघो भूरिमस्तिष्कभग्नः।

२. एकस्मिन् पद्माकरे नैके पद्मिनो नानापङ्काः।

३. गोष्ठी वा गोष्ठं वा ?

४. नानामार्गेषु नाना मरीचिकाः।

९२.१७.कं-शिरः।९२.२०.हाहा हूहू इति केचन गायन्तो देवगायना वस्तुतः सन्तीति उदन्तकथा।सौरं-सुराणाम् इदं, दिव्यमित्यर्थः।९३.२.गोमायुः-शृगालः।९४.२.पद्मिनः-गजाः।





५. बहुभिः कुम्भकारैर्भङ्गः कुम्भस्य।

६. भुजबलमेव भूरि भद्रम्।

७. विचारे मृते विकार उत्थितः।

८. शीर्षाणां वैपुल्यं कार्याणां वैफल्यम्।

९. संघटना वा संघट्टनं वा ?

१०. सङ्घो दुष्टैरङ्घो दीर्णः।

११. सभायां कण्ठबलमेवाकुण्ठं बलम्।

१२. समानस्वान्ताः संमिलन्ति।

१३. समितिर्घटिता संमतिस्त्रुटिता।

१४. समुदाये संग्रामः।

१५. समैरेव सौहार्दम्।

१६. हास्ये समाप्ते हुडुयुद्धमारब्धम्। [१२६७]

## ९५.योगः

१. अरण्यमेव विरक्तानां हिरण्यम्।

२. काचकनेत्राः शोचनीयदृश्वानः पातञ्जलयोगे
वाचनिकां रोचयन्ते।

९४.१६.हुडुयुद्धम्-मेषाणां परस्परेण ललाटाघट्टनलक्षणं युद्धम्।९५.२. काचकनेत्राः-नवीनकालिकं काचनिर्मितं स्पेक्टेकल्स् (Spectacles) इत्याख्यं सामग्रीविशेषं धारयन्तः।वाचनिकां-प्रवचनम्। पातञ्जलयोगे विभूतिपादे सुस्पष्टं दृष्टिशक्तिवर्धनोपाय उक्तः। साधारण्यापि दृष्टिशक्त्या रहिताः सन्तः स्पेक्टेकल्स्धारिणो ये जनाः दृष्टिसामर्थ्याधिक्यसिद्ध्य-र्थोपायमुपदेष्टरि पातञ्जलयोगे प्रवचनं दित्सन्ति तेऽनेनाभाणकेन विड-म्ब्यन्ते।स्पेक्टेकल्स्धारणं योगे पक्वता चेति परस्परेण विरुद्धे।

३. दैहिकाः क्लेशा योगेन दूरीभवन्तीति दृष्टिन्यूनस्य दीर्घं भाषणम्।

४. ध्यात्वाऽऽत्मानं धुनुते दैन्यम्।

५. पद्मासनं पक्वं सद्मरहितानाम्।

६. पातञ्जलेन योगेन स्फीतं तमो हन्ति।

७. प्राणायामं चिकीर्षुः प्राणसंकटं व्यतानीत्।

८. बकासनाभ्यासेऽपि बकबुद्धिर्न बाधिता।

९. वीक्षणे कृतकष्टानां तुष्टिरष्टासु सिद्धिषु।

१०. शवासनं कृत्वा भवातङ्कं भनक्ति।

११. शिवयोगी कालेन भवरोगी बभूव।

१२. स्वयं तङ्कति,सहस्रं संसारिणः शङ्कापङ्कादुद्दिधीर्षति। [१२७९]

## ९६.दर्शनम्

१. अध्यात्ममार्गः सुध्यानयोगः।

२. अध्यात्मे मेधिरा एव मेदिनीधराः ।

३. अहमः शोधः सर्वविबोधः।

---

९५.३.अत्रापि पूर्वतनाभाणकोक्त एवाभिप्रायः।९५.४.धुनुते-कम्पयति, लक्षणया प्रभावहीनं करोति,निवारयति वा।९५.५. पद्मासनं-लक्षणया योगाभ्यासः।पक्वं-सिद्धिजनकम्।सद्म-लक्षणया लौकिकी चिन्ता। ९५.६.स्फीतं-वृद्धम्।स्फायी वृद्धौ।स्फायःस्फी निष्ठायाम् (६.१.२६)इति स्फ्यादेशः।९५.९.वीक्षणे-आत्मदर्शने।कृतकष्टानां-तप आचरताम्। ९५.१२.धनार्थं गुरुवेषं धरतां परामर्शः कृतोऽत्र।९६.२. मेधिराः-मेधावन्तः।वैदिकोऽयं शब्दः।





४. अहमेव ममापिः।

५. अहमो मुक्तिः शुद्धा युक्तिः।

६. ऊढानां सङ्घे रूढाध्यात्मनां किं कृत्यम् ?

७. एकान्ते शोकान्तः।

८. एको मार्गो मृग्यमेकं तुरीयम्।

९. एतावदेवेदमिति ज्ञाते पातालं प्रापय प्रमाणशास्त्राणि।

१०. कन्थां गृहीत्वा पन्थानं गच्छ।

११. गिरा गुरोर्निःसरति मार्गं मार्गयेति।

१२. गुरुभावं प्राप्तुम् उरुगाये पथि पद्यस्व।

१३. ग्रन्थानध्वीष्व, पन्थानं तु स्वयमन्विष्य।

१४. जुनात्यात्मा पुनात्यात्मा।

१५. तनुमनसी त्यजन्ति तविषीभिर्मिलन्ति।

१६. तमो याति, ज्ञानमेति।

१७. तरङ्गा भवन्ति, त्रिरङ्गाः स्वनन्ति।

१८. दर्शनं दाशुषे दीर्घदण्डः प्रणामः।

---

९६.४.आपिः-बन्धुः। वैदिकोऽयं शब्दः। ९६.५.अहमः-अस्मद्+ङसि। ९६.१२.उरुगाये-श्रेष्ठैः स्तूयमाने। प्रशस्त इति यावत्। वैदिकोऽयं शब्दः।पद्यस्व-गच्छ।पद गतौ। ९६.१४. जुनाति-प्रेरयति।वैदिकोऽयं शब्दः। ९६.१५.तविषीभिः-बलैः। वैदिकोऽयं शब्दः।९६.१७.त्रिरङ्गाः-सत्त्व-रजस्-तम आख्याः। ९६.१८. दर्शनम्-तत्त्वज्ञानम्।दाशुषे-दत्तवत्ते, लक्षणया ददानाय।वैदिकोऽयं शब्दः।

१९. दारुणस्य भवबुन्दस्य ध्यानं दृढो द्रापिः।

२०. देशना दूष्यते, वर्तनं भूष्यते।

२१. परमात्मा प्रवचनात् पलायते।

२२. बहिः साधिते त्वन्तः शोधितम्।

२३. भज तत्त्वं त्वं कालाधारं
सृजनस्थितिलयकालातीतम् ।

२४. रिक्ते पात्रे पीयूषं पूर्यते।

२५. लप्स्यते लभ्यते लब्धं याहि याहि च याहि च।

२६. वारं वारं निमज्जन्ति पारावारे धुरन्धराः।

२७. श्रवणे जाते श्राणं ध्यानम्।

२८. सर्वत्यागे पर्वाध्यात्मिकम्।

२९. सारं साधनं, केवलं बोधनं तु केवलं बाधनम्।

३०. स्वयं सरेति स्वरन् आचार्यः, सदा शृण्विति
गृणन्ननार्यः।

३१. हीनाः प्रवचनेन दीनाः संपत्त्या मीनायन्ते
दर्शनोदधौ । [१३१०]

---

९६.१९.भवबुन्दस्य-संसाराख्यस्य बाणस्य।बुन्दशब्दो वैदिकः ।द्रापिः कवचम्।अयमपि वैदिकः शब्दः।९६.२०.देशना-उपदेशः।९६.२६.वारं वारं-पुनःपुनः। पारावारे-समुद्रे,लक्षणया मननाख्ये।धुरंधराः-विषयज्ञान-रूपं कर्तव्यभारं वहमानाः।केवलमल्पकालिकेन साधनेन गुरवो योगिसंज्ञा-धारिणो वा न बुभूषन्ति वास्तविकाः साधकाः परन्तु ते गभीरं यथा स्यात्तथा पौनःपुन्येन ध्यानं कुर्वन्ति।९६.२७.श्रवणे-ओङ्कारश्रवणे।श्राणं-पक्वं, सिद्धमिति यावत्।९६.२९.सारं-उत्कृष्टम्।इदमर्थे शब्दोऽयं नपुं-सकः।९६.३०.सर-गच्छ।गृणन्-कथयन्।गृ शब्दे क्र्यादिः।





## ९७.आशिषः

१. कण्टकेषु सुजनः क्रुध्यात्।

२. कर्मनिष्ठो धर्मं कीर्त्यात्।

३. कविः कवित्वेन क्रुश्यात्।

४. चारुसिद्धिश्चकास्यात्।

५. जगति जना जागर्यासुः।

६. ज्ञानज्योतिर्ज्वल्यात्।

७. दण्ड्येषु धर्मो न दयिषीष्ट।

८. भव्यबुद्धिराभाणकान् भण्यात्।

९. भुवनेषु भद्रं भूयात्।

१०. वाग्मिनो विशेषज्ञानिनो भूयासुः।

११. विश्वस्मिन् विज्ञानं विजृम्भिषीष्ट।

१२. संस्कृतम् इति शब्दस्य संस्कृतम् इत्येवार्थो भूयात्।

१३. सर्वसहा सर्वासहा न भूयात्। [१३२२]



---

९७.११.सर्वसहा-भूमिः।

## उपसंहारः

१.एवं हेवाकवेगादतनुत जगतां नाथ एनां नवीनां
वाणीं सद्वाक्यवेणीमभिनवरसिकश्रेणिवीणायमानाम् ।
क्वाचित्कैः पौनरुक्त्यैरनुचितवचनैरप्रबुद्धप्रयोगैर्
दूरोत्सार्येयमार्यैरपि ननु नुतये नूतना नव्यधीनाम् ॥

२.उद्यानेषु क्रीडता मर्कटेन
क्रोधोद्वेगं नैति पद्मी[१] कदाचित्।
ध्वाङ्क्षे रूक्षं ध्वाङ्क्षति, च्छिन्नपक्षो
विक्षिप्तः सन् किं पिको रारटीति ? ॥

३.प्रागेवैतादृशीं यद्यपि कृतिमकरोद् ज्ञः 'करूर् शेष'[२] नामा
व्याहारैश्चित्तचोरैः सहृदयसुभगैः कन्नडोक्तीरनूद्य ।
एषोऽस्यां मे विशेषो विशदमनुकृता रीतिराभाणकीया
प्रासप्राधान्यमान्या जडबुधमधुरा नव्यया यत् पदव्या ॥

४.वीक्षन्तां शम्बलत्वं[३] दृढलपितयुजामध्वनामध्वनीनाः
सामान्ये वा विशेषे प्रकृतकृतिगते साध्वदीनाः कवीनाः[४]।
एतावत्येव तावद् भवति कृतिरियं प्राय एतादृशीति
भ्रान्तिः कार्या न चार्यैरनवधिरुदयो यद् वचोवैभवानाम् ॥

---

१.पद्मी-गजः।
२.दिवङ्गतेन विदुषा करूर्शेषाचार्येण एतादृशी प्रासरहिता कन्नडाभाणकानाम् अनुवादमात्रा काचिद् रचना "लौकिकगाथाचतुश्शती"नाम्नी रचितपूर्वा महाराजसंस्कृतमहापाठशालापत्रिकायां प्रकाशितपूर्वा च।
३.शम्बलत्वं-पाथेयत्वम्। 'पाथेयं शम्बलं समे' इत्यभिधानचिन्तामणिः।
४.कवीनाः-कवीनाम् इनाः-सूर्याः,कवीन्द्रा इति यावत्।





५.अन्तःसत्त्वप्रथिम्ना जगदनुभवसत्पाकभूम्ना च वाणी-
प्राणैराभाणकैर्ये लपितमनुदिनं पूरयन्ति प्रभूतैः।
तेषां भाषैव भाषा न पुनरनुकृतप्राच्यकाव्यप्रसिद्ध-
द्वित्रोत्कृष्टोक्तिभाजां बहुपदनिबिडा भारतीभूरिपीडा ॥

६.शोभोदयाय भवति कदाचित् क्षोभो, लोके, जीवनमेतत्।
लोभादिदोषकलुषान् मनुजानाभाणकवार्न[१] क्षालयति [२] ॥

७.वामं[३] विपुलविलासं कामं कलयतु हासम्।
गोभावुक[४]हृदयाब्जेष्वाभाणकमिहिरश्रीः[५]॥

८.हसन्तु जगतीतले हितमणद्भि[६]राभाणकैः
स्फुरद्भिरखिला जनाः सहजसारसारस्वतैः[७]।
अदभ्ररुधिरामिषाद्मर-करालकर्मक्रम-
श्वदष्टकुणपाननस्मितविलासविस्तारकैः[८]॥

९. भक्ष्याणि नव्यानि पुराणपात्रे
स्वाद्यानि लोकाः सपदि स्वदन्ताम्।

---

१.आभाणक-वाः-आभाणकरूपं जलम्। 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः।
२.गन्धाख्या छन्दोजातिरियम्। 'स्कन्धके'(आर्यागीत्यां)तत्सहोदरे कन्नडीये 'कन्दे' च प्रथमतृतीययोः पादयोस्त्रयो(३)गणाः,द्वितीयचतुर्थयोस्तु पञ्च(५) गणाः। मया तु पूर्वार्धे ४+४,उत्तरार्धेऽपि ४+४ एवं गणयोजना कृता। स्कन्धक-कन्दयोः स्मारिका 'गन्धे'ति संज्ञा च दत्ता।
३.वामं-सुन्दरम्।
४.गोभावुकाः-गोः भाषायाः भावुकाः -सहृदयाः।
५.अत्रत्यं वृत्तं 'तनुगा'नामकं मयैव सृष्टम्। तनगग इति तल्लक्षणम्।
६.अणद्भिः-कथयद्भिः। अण शब्दे भ्वादिः।
७.सहजमथ च सारम्-उत्कृष्टं सारस्वतं तैः । आभाणकविशेषणमिदम्।
८.अदभ्रं-बहु। अद्मरः अतिभक्षणशीलस्तस्मादेव करालो भयङ्करः कर्मक्रमो यस्य। इत्थंभूतलक्षणेन शुनाऽपि दष्टस्य शवस्यानने स्मितस्य विलासं विस्तारयद्भिः।

अर्थान् पुराणानभिनव्यशब्दे
रस्यान् रसज्ञा रसयन्तु मन्दम्॥

१०.संभाषणेषु कवितासु च सज्जनानाम्
आभाणकप्रचुरवाक्यगणः प्रयुक्तः।
सद्बोधनेन भुवि भावुककर्णपाली-
पीयूषसेकसुभगं कुशलं कृषीष्ट ॥

११.सप्रासदार्ढ्यानि कलेवराणि
प्राज्ञोपदेशा अपि जीवनाड्यः।
येषां च ये प्राणकरा गिराणाम्
आभाणकास्ते जनतां जुषन्तु ॥

१२.स्वप्रयत्नाभिधो देवः स्वाचार्यो यस्य नापरः।
जगन्नाथेन तेनेयं तेने तनुतरा कृतिः ॥





# आभाणकजगन्नाथः

## परिशिष्टविभागः



# विषयाणाम् अकारादिसूचिका

अत्र दत्ताः संख्याः विषयाणां, न तु पृष्ठानाम्।

# आभाणकानाम् अकारादिसूचिका

अत्र दत्ताः संख्याः विषयाणां, न तु पृष्ठानाम्।

## पादटिप्पणीषु विवृतानां शब्दानाम् अकारादिसूचिका

अत्र दत्ताः संख्याः पृष्ठानाम्।

## आभाणकानामाहत्य संख्या

| अध्यायः | आभा.संख्या | अध्यायः | आभा.संख्या | अध्यायः | आभा.संख्या | अध्यायः | आभा.संख्या | अध्यायः | आभा.संख्या |
|---|---|---|---|---|---|---|---|---|---|
| १. | २१ | २१. | ७ | ४१. | १५ | ६१. | २९ | ८१. | ३ |
| २. | ४२ | २२. | ७ | ४२. | ४ | ६२. | २२ | ८२. | २५ |
| ३. | २१ | २३. | ८ | ४३. | २ | ६३. | ८ | ८३. | ५५ |
| ४. | ९ | २४. | १३ | ४४. | ४ | ६४. | २६ | ८४. | ८ |
| ५. | ३ | २५. | ६ | ४५. | १४ | ६५. | २१ | ८५. | १३ |
| ६. | ८ | २६. | २ | ४६. | ११ | ६६. | ३ | ८६. | २९ |
| ७. | ८ | २७. | ९ | ४७. | २० | ६७. | १२ | ८७. | १२ |
| ८. | ८ | २८. | ९ | ४८. | १० | ६८. | ६ | ८८. | ११ |
| ९. | ११ | २९. | ३ | ४९. | ३१ | ६९. | ५ | ८९. | २२ |
| १०. | ९ | ३०. | ११ | ५०. | २४ | ७०. | १३ | ९०. | १८ |
| ११. | २ | ३१. | १६ | ५१. | ३९ | ७१. | ३३ | ९१. | १० |
| १२. | २१ | ३२. | ७ | ५२. | ४ | ७२. | ५ | ९२. | २० |
| १३. | ८६ | ३३. | ८ | ५३. | ४ | ७३. | ७ | ९३. | २ |
| १४. | ८ | ३४. | २ | ५४. | ९ | ७४. | ५ | ९४. | १६ |
| १५. | ६ | ३५. | ३ | ५५. | ४ | ७५. | ४ | ९५. | १२ |
| १६. | ४० | ३६. | २१ | ५६. | ११ | ७६. | २ | ९६. | ३१ |
| १७. | ११ | ३७. | ६ | ५७. | ६ | ७७. | ४ | ९७. | १२ |
| १८. | ६ | ३८. | ६ | ५८. | ७ | ७८. | ३ | आहत्य | १३२२ |
| १९. | १३ | ३९. | ४ | ५९. | १९ | ७९. | ७० | | |
| २०. | ५ | ४०. | ९ | ६०. | ९ | ८०. | ३ | | |